Paramartha Series' Volume III.

'तस्मै सर्वात्मने नमः'

# अधिकरणरत्नमाला

## परमार्थदर्शनीया

सवार्त्तिका



...च्युतारशर्मणा प्रणीता प्रकाशिता च ।



काश्याम्

महामण्डलशास्त्रप्रकाशकसमितियन्त्रे

श्रीअम्बिकाचरणचक्रवर्त्ती द्वारा मुद्रिता ।

सन् १९१३ ई०

मूल्यम् १)

# शुद्धिपत्रम् ।



| शुद्धम् | अशुद्धम् | पृ० | पं० |
| --- | --- | --- | --- |
| मानम् | मनम् | ८ | ६ |
| चाद्भुतं | चाद्भलं | १२ | ५ |
| दृष्टि | दृष्टि | १७ | १३ |
| ज्ञात | ज्ञाता | २१ | २ |
| प्राकृता | प्रकृता | २१ | १८ |
| दस्त्व | दस्त्व | २३ | १ |
| अनेन | अवेन | २९ | १९ |
| संक्षेपो | संक्षपो | ३० | १३ |
| कृत्ता | कृत्ता | ३१ | २ |
| विप्रकर्षः | विप्रकषः | ३५ | ७ |
| जीव | जव | ४१ | १ |
| वुध | चुध | ४१ | १२ |
| मीते | मते | ४३ | १२ |
| सौर | सार | ४३ | १९ |
| चता | नता | ४५ | १४ |
| निसर्ग | विसर्ग | ५० | ११ |
| पीता | पोता | ५१ | ३ |

| शुद्धम् | | अशुद्धम् | | पृ० | | पं० |
|---|---|---|---|---|---|---|
| ज्ञनी | ... | ज्ञनी | ... | ५३ | ... | ६ |
| वधू | ... | धधू | ... | ५३ | ... | २० |
| स्त्रिद्धौ | ... | स्त्रिद्धा | ... | ५५ | ... | ९ |
| द्यापि | ... | चांपि | ... | ६० | ... | ९ |
| याखिलं | ... | चाखिल | ... | ६१ | ... | १३ |
| सत्य | ... | सत | ... | ६४ | ... | ४ |
| मधु | ... | स्तु | ... | ६६ | ... | १८ |
| योगी | ... | योग | ... | ७४ | ... | ३ |
| धर्म | ... | मेध | ... | ७५ | ... | २२ |
| ह्रास | ... | ह्रास | ... | ७६ | ... | ६ |
| दृष्टा | ... | दृस्टा | ... | ८२ | ... | ८ |
| ग्राम्येषु | ... | गाम्यषु | ... | ८३ | ... | १४ |
| श्रेष्ठा | ... | श्रेष्ठया | ... | ८६ | ... | २ |
| त्वं | ... | तं | ... | ९४ | ... | १० |
| प्रमातृन् | ... | प्रमातन् | ... | १०६ | ... | २२ |
| न वा, | ... | न वा | ... | १२५ | ... | ५ |
| पूर्वे | ... | पूव | ... | १३१ | ... | ३ |



# अधिकरणरत्नमाला परमार्थदर्शनीया सवार्तिका ।

—:o:—

अमेयाद्दर्शनाम्भोधेरुच्चितैरर्थमौक्तिकैः ।
परमार्थाधिकरण–रत्नमाला विधीयते ॥ १ ॥

प्रथमाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति–

दर्शनं सार्थकमिदमथवा स्यान्निरर्थकम् ।
सत्त्वाद्बहूनां शास्त्राणां नैतस्यार्थो विभाव्यते ॥ १ ॥

---

वार्तिकानि–

उपक्रमः

कुत्र केन लिखितं किमित्ययं नाममात्रविदुषां दुराग्रहः ।
वस्तु कीदृगिति वक्तृनिस्पृहेन्वेषणं तु परमार्थदर्शने ॥ १ ॥
प्राच्यमार्यभटजीवितावधि प्रत्यगप्यथ कुपर्णिकोदयम् ।
अप्रमत्तविदुषां यथायथं दर्शितं मतमिहाग्रहं विना ॥ २ ॥
भट्टवल्लभमुखैरनाग्रहैः सुक्रतुप्रभृतिभिश्च यत्परैः ।
व्याहृतिप्रणयशून्यमीरितं संगृहीतमिह तत्प्रयत्नतः ॥ ३ ॥
देवशब्दकलिदिव्यशक्तिभिः ख्यापिताभिरिह धूर्तवाग्विशैः ।
वञ्चिते न परमार्थधीर्जने तां पुनर्जनयितुं यतामहे ॥ ४ ॥
शास्त्रभारनतकन्धरा अपि व्याहृतिप्रणयिनो विपश्चितः ।
तान्सुखेन परमार्थतत्परान्कर्तुमेष विपुलः परिश्रमः ॥ ५ ॥
शिल्पशास्त्रपयसा सरस्वतीं कामधेनुमिव विश्वतोषिणीम् ।
ह्यानुपास्य कितवप्रतारणां पोत्रिणीमिव निषेवते जनः ॥ ६ ॥

संग्रहश्च विवेकश्च व्यवस्थानाग्रहस्तथा ।
हयोगाभ्युदयौ चास्य दर्शनस्य प्रयोजनम् ॥ २ ॥
सूत्रम्—अथ परमार्थानुशासनम् । १।१।१।

---

(श्र० १) पादुकाभ्यां विपश्चाग्रा मस्करी वह्निवस्करः ।
भूकुंडानुचरो रामः सतीनीवेस्तनूनपात् ॥ ७ ॥
भक्ताकारो हरिर्दृष्टः केशः सर्पत्वमाप्नुवान् ।
निर्विघ्नः सर्वविद्दृष्टो भिक्षुश्चैवेष्टवृष्टिकृत् ॥ ८ ॥
हुंकारैर्मारणं सद्यो यवसैर्हेमतायसः ।
शब्दैर्विषापनयनं जपेन च वशीक्रिया ॥ ९ ॥
लेखश्चाद्भुतया यष्ट्या निर्व्याख्यो ज्ञानसंक्रमः ।
पिशाचाच्च प्रजोत्पत्तिर्धनाप्तिर्ब्रह्मराक्षसात् ॥ १० ॥
दुग्धं वायोर्घृतं नद्या मेषत्वं व्यभिचारिणः ।
कुष्ठैर्ज्वरचिकित्सा च लयो जन्तोः शिलासु ॥ ११ ॥
जन्माङ्कात्लक्षणं वध्वाः प्रस्थाने शकुनात्फलम् ।
जातिस्मरत्वं बालानां ध्याने देवैश्च भाषणम् ॥ १२ ॥
ईदृशा विषयाः स्पष्टं व्याहता दृष्टिशालिनाम् ।
वन्ध्यापुत्रानुसंधान-सदसोऽन्वेष्यतां गताः ॥ १३ ॥
जले स्थले च वायौ च वाष्पनौकादिभिर्गमः ।
विदुषां सेवनं नित्यं शिल्पशास्त्राद्यवेक्षणम् ॥ १४ ॥
हरेरखेदनं स्वार्थे त्यागः सर्वज्ञमानिनाम् ।
विपश्याधिवणादीनां सद्भिर्पतिभिश्चिकित्सनम् ॥ १५ ॥

द्वितीयाधिकरणमारचयति–

प्रमाणमस्ति वा नास्ति, नास्ति सर्वविशेषतः।
अर्थोऽस्ति परिणामेऽपि प्रमाणत्रयगोचरः ॥ १ ॥
प्रत्यक्षमनुमानं च तथाप्ताज्ञेति तत्त्रयम्।
तस्मात्प्रमाणमस्त्येव सहकारि परस्परम् ॥ २ ॥

---

भूतादौ प्रत्ययाभावः स्वोद्योगस्यावलम्बनम्।
प्रत्यक्षाल्लक्षणज्ञानं भक्तिराप्तेष्वहेतुका ॥ १६ ॥
क्षीराद्यर्थं गवादीनां श्रद्धयाराधनं तथा।
सर्वत्र कार्यसंबद्ध-कारणान्वेषणो भ्रमः ॥ १७ ॥
प्रत्यादेशो व्याहतानामव्याहतपरीक्षणम्।
ईदृशा विषया दृष्टाः परमार्थानुसारिणाम् ॥ १८ ॥
(अ० २) प्रत्यक्षेणानुमानेनाबाधेनाप्तात्तयापि वा।
यो ज्ञापितः सदर्थः परमार्थ इति स्थितिः ॥ १९ ॥
यः प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः।
व्याहतोऽपरमार्थः स प्रज्ञेयः पारमार्थिकैः ॥ २० ॥
प्रत्यक्षे चानुमाने च कदाचिद्बाधसंभवः।
तस्मात्तु नाविधावन्यत्प्रमाणं भवितुं क्षमम् ॥ २१ ॥
चरणाभ्यां प्रचरतः सति स्खलनसंभवे।
कः पुनर्नाशया गन्तुमनुन्मत्तोऽध्यवस्यति ॥ २२ ॥
पश्यन्स्पृशन्गजाश्वादीन्को वा मन्येत मायिकान्।
व्याहतान्वा पिशाचादीन्गृह्णीयात्पारमार्थिकान् ॥ २३ ॥

सूत्राणि—अव्याहतः पुत्रवतीपुत्रसमः परमार्थस्तदन्यो वन्ध्यापुत्रसमः १।१।२ परमार्थः प्रत्यक्षानुमानाभ्यामबाधिताभ्यामाप्ताज्ञया च निर्णीतार्थेया ।१।१।३ व्याहतिर्बाधः। १।१।४ विलोपोबाध इति भिक्षवः ।१।१।५ तानि त्रीणि प्रमाणानि प्रसिद्धानि ।१।१।६ प्रमाणविशेषाणामंशमात्रावगाहिनां विषयविभागो विरोधाभावः सहकारित्वं च॥ १।१।७

---

माध्वो रश्मिगृहीतो हि वायुभूतः पलायते।
न वा प्रेतः पिता पिण्ड-भक्षणायैति देहभृत् ॥ २४ ॥
श्राद्धानुष्ठीयते पुत्रैः पितॄणां जीवतां यथा।
मृतेष्वपि तदादेशाच्चिवापो नतु तृप्तये ॥ २५ ॥
यथाह्निकानां मध्वादि-चरणं फलमुच्यते।
तथैवातिशयोक्त्यैव तृप्तिमाहुर्निवापजाम् ॥ २६ ॥
यः स्वर्वैश्यादिलोभेन निरयेभ्यो भयेन वा।
भूतप्रेतपिशाचादि-तृप्तये वा विमूढधीः ॥ २७ ॥
धर्मं करोति तत्तस्य धार्मिकत्वं नैव धर्मधीः।
वेश्याप्रलोभनेनैव निरयेभ्यो भयेन वा ॥ २८ ॥
धर्माच्चिवार्यते यस्तु निर्हेतुर्यस्य धर्मधीः।
तस्य ज्ञानं तपस्तस्य स धर्मात्मा स बुद्धिमान् ॥ २९ ॥
जीवतां वा मृतानां वा सफला निष्फलापि वा।
कार्यैवाचेति [illegible] ॥ ३० ॥

तृतीयाधिकरणमारचयति—

प्रत्यक्षं संनिकृष्टांशे विप्रकृष्टेपि वा भवेत् ।
संभवेद्विप्रकृष्टेपि योग्यादीनां जनश्रुतेः ॥ १ ॥

---

भूतप्रेतपिशाचादि-स्थितौ मानं न दृश्यते ।
सत्त्वेपि तान्वा कः प्राज्ञः कुटुम्बोपेक्षया भजेत् ॥ ३१ ॥
पूर्वजानामपीणां तु निवापादिविधिर्यतः ।
विधिरित्येव कार्यः स तत्र मानान्तरेण किम् ॥ ३२ ॥
ये यामिकभयादेव चौर्यं नैव प्रकुर्वते ।
चार्वाकास्ते न कुर्वन्तु विधीन्दण्डभयोज्झितान् ॥ ३३
ये रक्षिणामभावेपि नैव चौर्यादि कुर्वते ।
धर्मभक्त्यैव सभ्यास्ते कुर्युर्निर्हेतुकान्विधीन् ॥ ३४ ॥
यत्कदाप्यस्ति तत्सर्वं सदित्येव विनिश्चयः ।
क्षणिकत्वं स्थिरत्वं वा सत्तायामप्रयोजकम् ॥ ३५ ॥
कल्पस्थायी गिरिः सत्यः क्षणजीवी कृमिर्न सन् ।
प्रेक्षावतामयं भेदो न जातु हृदयंगमः ॥ ३६ ॥
न पाटलिपुरं काश्यां न सा पाटलिपत्तने ।
विलोपमीदृशं पश्यन्कः शून्यपुरमावसेत् ॥ ३७ ॥
विलुप्यमानं वैचित्र्यं वैचित्र्यान्तर आगते ।
पश्यंस्तथैव को ब्रह्म निर्वैचित्र्यं प्रपद्यताम् ॥ ३८ ॥
प्रत्यक्षं चानुमानं च तथाप्राप्तेति तत्त्रयम् ।
विभक्तविषयं सिद्धं प्रमाणं नास्त्यतः परम् ॥ ३९ ॥

द्वारेन्द्रियाद्यतिशयात्संनिकर्षवति स्फुटम् ।
प्रत्यक्षं विप्रकृष्टे तु वन्ध्यापुत्रायितं ध्रुवम् ॥ २ ॥

सूत्रे–संनिकृष्टांशे सोपलभ्ययन्त्रादिसहायं प्रत्यक्षम् । १।१८
संनिकर्षो द्वारेन्द्रियविषयविशेषापेक्षः । १।१।६ ॥

चतुर्थाधिकरणमारचयति–

उपलम्भः सहायादेरुत्कर्षाद्बाध्यते न वा ।
तस्य बाधो मुहुर्दृष्टः पृथिव्याः स्थिरतादिके ॥ १ ॥
अप्रमत्तोपलम्भस्य न बाधो दृश्यते क्वचित् ।
साधीयस्ता सहायादेरुत्कर्षात्संभवत्यलम् ॥ २ ॥

---

(अ० ३) प्रत्यक्षं संनिकृष्टांशे तद्भिन्नेनुमितिर्मता ।
द्वयं वस्तुनि तत्सिद्धेनुष्ठेये तु विधेः प्रमा ॥ ४० ॥
दिव्यशक्त्योपरागादि-कालं नो वेत्ति कश्चन ।
यन्त्रादिसहकारेण गणिताज्ज्ञायते हि तत् ॥ ४१ ॥
यन्त्राद्यसहकारेण गणितेपि कृते महत् ।
होराकलादौ वैषम्यं तस्माद्यन्त्राद्यपेक्ष्यते ॥ ४२ ॥
(अ० ४) नौकायां वाष्पयाने वा गच्छंस्तीरादि मन्यते ।
चलत्प्रतिमुखं प्रायः प्राज्ञोपि प्रथमं यथा ॥ ४३ ॥
तथा भुवि विसर्पन्त्यां परितो रविमण्डलम् ।
ताराद्युपेतमाकाशं भाति प्रतिमुखं व्रजत् ॥ ४४ ॥

सूत्राणि–सहायतुल्याद्युत्कर्षात्साधुतरत्वं न बाधोऽप्रमत्तोपलम्भस्य । १।१।१० । मरुमरीचिकायां रूपमात्रोपलम्भे स्मृतस्य रसादेराशा प्रमादः । १।१।११ । स दिग्भ्रम इवावधानमात्रसाध्यः । १।१।१२ ॥

---

भूः स्थिरेत्यवसिता यस्मात्संभवे सत्यपीदृशे ।
प्रामादिकं स्थिरत्वं तदनुमित्याद्य बाधितम् ॥ ४५ ॥
सति प्रमादादज्ञाते तद्विरथं बाधसंभवे ।
निश्चयः संशयस्थाने बाध्येतेति किमद्भुतम् ॥ ४६ ॥
प्रत्यक्षं विप्रकृष्टांशे प्रमाणं नेत्यजानतः ।
ताराग्रहादिविज्ञानं नूनं प्रामादिकं भवेत् ॥ ४७ ॥
उपलभ्याम्भसो रूपं रसांशे मरीचिकाम् ।
अनुधावंश्च तच्चित्रं यच्चिरांशो विपद्यते ॥ ४८ ॥
अलक्षितागतां यस्मात्करे धूर्तेन दर्शिताम् ।
यो मुद्रां मन्त्रजां मत्वा मन्त्रं द्रव्याय साधयेत् ॥ ४९ ॥
कालशक्तिधनादीनां व्ययं कृत्वा स मूढधीः ।
किं चित्रं यद्विपद्येत मरौ चरिणको यथा ॥ ५० ॥
गोलाध्यायाद्यभिज्ञोऽपि विपुले पत्तने यथा ।
दिङ्मूढो न विजानीयात्सुहृद्गेहस्थितिं जनः ॥ ५१ ॥
पदवाक्यप्रमाणादि–भारावनतकन्धरः ॥
मन्त्रप्रेतान्ययाबिद्धिं तथैव न विभावयेत् ॥ ५२ ॥

पञ्चमाधिकरणमारचयति–

प्रत्यक्षानुमयोः क्षेत्रे शब्दो मानं भवेन्न वा ।
शब्दो मानं भवेदेव नृणां विस्रम्भदर्शनात् ॥ १ ॥
शब्दस्य ज्ञापकत्वान्नास्त्यविधौ तु प्रमाणता ।
प्रत्यक्षं चानुमा चैव सिद्धार्थस्योपपत्तये ॥ २ ॥

सूत्राणि–असंनिकृष्टांशेनुमनम् । १।१।१३ । दृष्टमिदमविधौ १।१।१४ । तत्र शब्दः सहायो न तु प्रमाणम् । १।१।१५ ॥

षष्ठाधिकरणमारचयति–

विधेः स्वतो वा प्रामाण्यं परतो वा तदिष्यताम् ।
प्रत्यक्षादनुमानाच्च प्रामाण्यं दृश्यते विधेः ॥ १ ॥

---

प्रमादाख्यमहाव्याधेरवधानं हि भेषजम् ।
शास्त्रभारस्य वहनं तच्चिकित्सितमुत्तमम् ॥ ५३ ॥
नृणां भुवि गतिं वीक्ष्य यथा वायुगमानुमा ।
शब्दाद्रोपादिकं वीक्ष्य तथा द्रव्योद्गमानुमा ॥ ५४
अप्रमत्तस्य शास्त्रेषु सफलः स्यात्परिश्रमः ।
अन्धस्य जायानेपथ्यं शास्त्रज्ञानं प्रमादिनः ॥ ५५ ॥
(अ० ५) प्रत्यक्षमनुमानं च परिनिष्ठितवस्तुगम् ।
यत्कार्यं पुरुषाधीनं विधेस्तत्र प्रमाणता ॥ ५६ ॥
(अ० ६) सद्योनुष्ठेयताप्तोक्ते निर्णीतार्थे विधौ स्थिता ।
अर्थाज्ञाने क्रियाभावोऽनाप्तस्याननुगम्यता ॥ ५७ ॥

स्वत आप्तविधेरत्र प्रामाण्यं परतो न तु ।
प्रत्यक्षस्यानुमायाश्च श्रवणाद्युपयोगिता ॥ २ ॥

सूत्रे—विधेस्त्वप्रमत्तेन श्रुतस्य स्मृतस्य चाप्तोक्तत्वे निर्णीतार्थत्वे च स्वतः प्रामाण्यम् १।१।१६ । तत्र श्रवणादिमात्रोपयोगिनो प्रत्यक्षानुमाने १।१।१७ ॥

सप्तमाधिकरणमारचयति—

कादाचित्कमिहाप्तत्वं किं वा स्यात्सार्वकालिकम् ।
अङ्गीक्रियेत पित्रादेराप्तता सार्वकालिकी ॥ १ ॥
सर्वत्र रागद्वेषादि-हेतुर्व्याहतवादिता ।
सत्यां तस्यामनाप्तत्वमसत्यां पुनराप्तता ॥ २ ॥

सूत्रे—उपकारातिशयमूलकसंबन्धविशेषवानव्याहतवाद्याप्तो यथा पितरौ १।१।१८ । व्याहतवादिता प्रमादादिजा विश्वजनीना १।१।१९ ॥

---

(अ० ७) जलमानय वत्सेति विधेयाज्ञा पितुर्द्रुतम् ।
वसने त्वज्वलताङ्गारानानयेति ह्युपेक्ष्यते ॥ ५८ ॥
संबन्धेनन्यसामान्ये पितृत्वादिप्रयोजके ।
स्थितेऽपि व्याहता नाज्ञानुष्ठातुं शक्यते जनैः ॥ ५९ ॥
प्रमादरागद्वेषादि जन्या व्याहतवादिता ।
प्राच्येष्वपि च नव्येषु सर्वत्रैवोपलभ्यते ॥ ६० ॥
तस्मादव्याहतं यत्स्यात्प्राच्यं वा नव्यमेव वा ।
तत्स्वीकार्यं परीक्षायै मिथ्यात्वं व्याहते स्फुटम् ॥ ६१ ॥

अष्टमाधिकरणमारचयति–

परीक्ष्यं व्याहतं नो वा, परीक्ष्यं संशयेऽन्यथा ।
न परीक्ष्यं विनिर्णीत-व्याघातं शुद्धबुद्धिभिः ॥ १ ॥
एकांशदर्शनादेवाविवेकविकलैर्जनैः ।
व्याहतस्योपलम्भो हि प्राकाम्यादेः प्रघोष्यते ॥ २ ॥

सूत्राणि—व्याहतमपरीक्ष्यं तदुपलम्भस्य सर्वत्र प्रमादजत्वात् १।१।२० । सतोऽर्व्यंतिकरस्य बाधितस्याप्येकांशदर्शनेन सुलभः प्रमादः १।१।२१ । सहढो विध्यर्थवादयोरर्थवादे च परीक्ष्यापरीक्ष्ययोरविवेकात् १।१।२२ ॥

---

(अ० ८) यत्प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः ।
प्रत्याहतं तन्मिथ्यैव न तस्यानुगमः शुभः ॥ ६२ ॥
नगरं दर्शयामीति प्रतिज्ञाय यथा व्रजन् ।
जनोऽनुगम्यते बालैर्न पुनः सरितं विशन् ॥ ६३ ॥
व्याकृतिं पाठयामीति पाठयन्ननुगम्यते ।
मन्त्रसिद्ध्या भवेद्विज्ञ इत्युक्तो समुपेक्ष्यते ॥ ६४ ॥
तथा सिद्धीर्विभूतीश्च वदन्धूर्त उपेक्ष्यताम् ।
शिल्पशास्त्रसदुद्योगाननुगम्यः शुचिर्वदन् ॥ ६७ ॥
मूर्खाः सिद्धिविभूत्याद्यैरतिशयेतुं विपश्चितः ।
प्रयतन्तो महाशक्तीर्न श्रद्धेयाः कथं चन ॥ ६६ ॥
शास्त्राभ्यासेन शिल्पेन सदुद्योगैस्तथा परैः ।
न भक्त्या सिद्धमूर्खाणां वास्तवी सिद्धिराप्यते ॥ ६७ ॥

नवमाधिकरणमारचयति-

प्रत्यक्षं मानसं नास्ति किंवास्ति, ननु नास्ति तत् ।
मनसो नेन्द्रियत्वं हि प्रत्यक्षं चेन्द्रियैरिह ॥ १ ॥
मनो मस्तिष्कनियतमुपलब्धृ स्फुटं च तत् ।
इन्द्रियं चोपलब्धृत्वात्तस्मात्स्मृत्यादि मानसम् ॥ २ ॥

---

महोद्योगैर्विपश्चिद्भिः शास्त्रशिल्पकलादिकम् ।
साधितं साध्यते चैव न धूर्तैः सिद्धनामभिः ॥ ६८ ॥
नीचा अशुचयश्चैव विद्योद्योगपराङ्मुखाः ।
इच्छन्तो जनसंमानं सिद्धीः प्रख्यापयन्त्यमी ॥ ६९ ॥
जुगुप्समानाः संमानाद्ब्राह्मणा ब्रह्मवादिनः ।
शिल्पशास्त्रकलोद्योगैः सिद्धिं व्याचक्षते पराम् ॥ ७० ॥
सिद्धेषु भक्त्या कल्याणं पापं तेषां परीक्षया ।
सिद्धमिक्यकमूर्तीनां परीक्षाग्नेर्महद्भयम् ॥ ७१ ॥
शिल्पशास्त्रकलोद्योगे परीक्षा तु पदे पदे ।
पारमार्थिकदक्षेभ्यः किं परीक्षाग्नेर्भयं क्व चित् ॥ ७२ ॥
वन्ध्या भार्या ममेत्यद्य वदतो वत्सरात्परम् ।
एकपत्नीव्रतस्येमौ परिणेयौ सुतौ मम ॥ ७३ ॥
इति वाग्व्याहता स्पष्टं व्याहतिस्तु न लक्ष्यते ।
आद्यं विस्मरता वाक्यं लक्ष्यते स्मरतो भयम् ॥ ७४ ॥
विषेण मारयन्धूर्तश्छद्मं सर्पादि दर्शयन् ।
विज्ञानाभासमभ्यस्यन्निवज्ज्वयन्बालिशोपधेः ॥ ७५ ॥

सूत्राणि—प्रत्यक्षमदोषेन्द्रियोपलम्भः १।१।२३। षड्विधमिन्द्रियाणां मनःषष्ठत्वात् १।१।२४। तानि चक्षुःश्रोत्रत्वग्रसनघ्राणमस्तिष्कस्थानानि १।१।२५। मानसं स्मृत्युत्प्रेक्षादि प्रसिद्धमन्यत् १।१।२६॥

---

भूतप्रेतपिशाचानां मन्त्राणां चाद्भुतं बलम्।
भक्त्यैकगम्यं प्रख्याप्य प्रतारयति बालिशान्॥ ७६॥
व्याहताव्याहतज्ञानाद्विध्यविध्योश्च संकरात्।
ज्ञानविज्ञानढिक्कूढो धूर्तानामेति वश्यताम्॥ ७७॥
प्रामाण्यमविधौ नैव परिनिष्ठितवस्तु न।
शब्दस्येत्यविजानन्हि विमुह्यति मुहुर्मुहुः॥ ७८॥
शब्दैरुक्तेप्यनुक्तेपि परिनिष्ठितवस्तुनि।
प्रत्यक्षादनुमानाच्च तत्त्वातत्त्वविनिर्णयः॥ ७९॥
वत्सानय फलानीति स्वाध्यायोऽध्येय इत्यपि।
सद्यो हेत्वनपेक्षैव पित्राद्याज्ञा विधीयते॥ ८०॥
क्षुद्रो वाराणसीग्रामो गङ्गा पश्चिमवाहिनी।
नापरीक्ष्योररीकार्यं कस्यापि वच ईदृशम्॥ ८१॥
बन्ध्यापुत्रस्य शिरसि फलं स्थितमिहानय।
ईदृशे तु परीक्षापि न कदाचित्प्रवर्त्यते॥ ८२॥
(अ० ६) अदोषेणेन्द्रियेणात्र यत्किंचिदुपलभ्यते।
अनेकेन्द्रियसंवादात्तत्प्रत्यक्षं दृढं भवेत्॥ ८३॥

दशमाधिकरणमारचयति-

अनुमानं प्रमाणं वा न वा, नास्य प्रमाणता ।
साहचर्यं न नियतं किं हि तत्र नियामकम् ॥ १ ॥
अंशांशिताऽत्र नियता तन्मूला चानुमा मता ।
तस्मात्प्रमाणमस्त्येवानुमानमिति निर्णयः ॥ २ ॥

सूत्राणि—अनुमानं प्रतिबद्धात्साधनात्साध्यग्रहः १।१।२७ । तादृशादंशादंशान्तरग्रहो वा १।१।२८ । द्विविधं सामान्यतो दृष्ट विशेषवच्च १।१।२९ ॥

---

चक्षुःश्रुतित्वग्रसन-घ्राणमस्तिष्कशक्तयः ।
इन्द्रियत्वेन विदितास्तत्प्रत्यक्षाणि षट् ततः ॥ ८ ॥
प्रत्यक्षात्मक एवासौ यः सदोषेन्द्रियग्रहः ।
संवादाशंसया दुष्यन्भवत्येष भ्रमात्मकः ॥ ८५ ॥
(अ०१०) व्याप्याद्व्यापकविज्ञानमनुमानमुदाहृतम् ।
व्याप्तिर्नियतसम्बन्धएकावयविनोंऽशयोः ॥ ८६ ॥
वह्नेर्हि धूम एकोंऽशः स्फुलिङ्गांशः परो मतः ।
अस्फुलिङ्गो न धूमः स्यात्स्फुलिङ्गः स्याद्धूमकः ॥ ८७ ॥
तत्त्वेनावयविज्ञानमकृत्वा तार्किकाङ्कुराः ।
ब्रुवन्त्यवयविज्ञानं प्रत्यक्षमपरीक्षकाः ॥ ८८ ॥
आहुः प्रत्यक्षमंशानां तथैवांशान्तरानुमाम् ।
अनुमानस्य बीजं चावयवित्वं परीक्षकाः ॥ ८९ ॥

एकादशाधिकरणमारचयति–

लोकान्तरशिलाभाव-सिद्ध्यादेः संभवो न वा ।
संभवस्यानुमानं स्याद्वैचित्र्यस्यात्र दर्शनात् ॥ १ ॥
सामान्यदृष्टस्याज्ञाता विशेषा गुणलङ्घने ।
विप्लवे मध्यमस्यापि व्याहतौ च न संभवः ॥ २ ॥

---

अस्यावयवितत्त्वस्याज्ञानाच्चार्वाकचत्वरे ।
नावकाशोनुमानस्य प्रत्यक्षैकायनेभवत् ॥ ९० ॥
अनुमानस्य का वार्ता प्रत्यक्षमपि विस्मरन् ।
उत्तमर्णपदाघातमृणं कृत्वा घृतं पिबन् ॥ ९१ ॥
धन्यश्चार्वाकजरठो धन्यास्तस्यानुगामिनः ।
लोकायतं मतं चित्रं लोको न बहु मन्यते ॥ ९२ ॥
मन्त्रान्मुदां स्त्रियं वायौ योगिन्युड्डयनं तथा ।
रेचकत्वं वाष्पयाने धनदत्वमुपानहि ॥ ९३ ॥
सहचारात्परं चेदृक् स्वीकुर्यात्तार्किकाङ्कुरः ।
अज्ञोऽवयवितत्त्वस्य मुधा शास्त्रभरार्दितः ॥ ९४ ॥
अकृत्रिमं कृत्रिमं च सर्वमेव सकर्तृकम् ।
अज्ञातहेतुकं सर्वं मन्त्रप्रेतादिहेतुकम् ॥ ९५ ॥
इत्यादिकल्पनास्तर्क-भारनम्रशिरोभृताम् ।
सहचाराद्भिदां व्याप्तेः सुव्यक्तामप्यगच्छताम् ॥ ९६ ॥
यदि न ज्ञायते हेतुः कल्प्यते व्याहतः कथम् ।
अज्ञानबोधः साधीयान्विपरीतग्रहान्मतः ॥ ९७ ॥

सूत्राणि—सामान्यतो दृष्टे विशेषकल्पनं प्रमादः १।१।३० । संभवानुमानं तर्कः १।१।३१। स गुणात्रिलङ्घने मध्यमाविपर्यासे च १।१।३२ । न प्रत्यक्षेण क्षुद्व्यक्ताभिर्व्याप्तिभिर्वा विरोधे १।१।३३।

द्वादशाधिकरणमारचयति—

ज्ञानमस्ति न वा, नास्ति विज्ञानेवसितं हि तत् ।
सर्वात्मनः स्वयं स्वेन ज्ञानमस्त्येव निश्चितम् ॥ १ ॥
द्रष्टृदृश्येन्द्रियार्थानां स्वस्मिन्यद्ग्रहणे क्षमम् ।
अनिषेध्या ह्यसंदिग्धा प्रमाणानां च सा प्रमा ॥ २ ॥

---

अज्ञातपितृको नैव यतिरोमादिसङ्गजः ।
नाज्ञातो यन्त्रचारश्च मन्त्रप्रेतादिशक्तिजः ॥ ९८ ॥
धूमभ्रमात्पराणादावनुमां बाधविस्रुताम् ।
बौद्ध्यानुमानमात्रस्याप्रामाण्यं चेद्वदेस्तदा ॥ ९९ ॥
स्याद्वादो पुरुषभ्रान्तेः प्रत्यक्षमपि दूषितम् ।
मत्वा तदप्यप्रमाणं न कथं हन्त मन्यसे ॥ १०० ॥
अ०११) सामान्यतोदृष्टरीत्या यदि लोकान्तरानुमा ।
पुरीविमानरूपादेर्विशेषोऽनुमितः कथम् ॥ १०१ ॥
संभवस्तर्क्यते तस्य यद्व्याहतिविवर्जितम् ।
व्याहतं यत्स्फुटं तस्य संभवोपि न तर्क्यते ॥ १०२ ॥
भुवि चारान्न कस्यापि वायो चारोनुमीयते ।
न पितुः शतजीवित्वात्परेषां कल्पजीविता ॥ १०३ ॥

सूत्रे—विज्ञानमदः १।१।३४। ज्ञानं सर्वात्मोपलम्भस्तत्प्रमाणं प्रमाणानाम् १।१।३५ ॥

त्रयोदशाधिकरणमारचयति-

विध्यर्थवादयोरत्नाविवेको हानिकृन्न वा ।
अर्थवादे विस्रम्भान्न हानिः कापि दृश्यते ॥ १ ॥
अर्थवादेषु विस्रम्भाज्ज्ञानविज्ञानविप्लवः ।
सिद्धो हि खे चरन्पङ्गुर्यां ज्ञानाद्यैः किं करिष्यति ॥ २ ॥

---

पौलस्त्यो भास्करस्पर्शी वैदेहो मुनिशोणितात् ।
अत्युक्तिरीदृशी सर्वा न श्रद्धेया कथं चन ॥ १०४ ॥
कर्तृत्वं परत्र सर्वत्र सर्वज्ञत्वं तथात्मनि ।
ख्यापयन्तः सिद्धधूर्ताः परिहार्याः प्रयत्नतः ॥ १०५ ॥
(अ०१२) द्रष्टुर्बहिर्यो विषयोपलम्भो विज्ञानमेतद्विदितं जनानाम् ।
ज्ञानं तु सर्वात्मन ईश्वरस्य स्वस्मिन्स्वरूपस्य किलोपलब्धिः ॥१०६
मनः शरीरं च सर्वेन्द्रियं तथा ततोऽपि बाह्यान्विषयानिहात्मनि ।
स्वयं स यः साक्षितयेक्षते विभुः स एक एव प्रमितः परा प्रमा ॥१०७॥
क्षणस्य कल्पस्य च यत्र नो भिदा चिदात्मनि स्वप्रमितौ चिरस्थितौ ।
अशेषवैचित्र्यमयः सकेवलं क्षणेषु साम्यव्यतिरेकवोत्तकः ॥१०८॥
अमुष्य सर्वात्ममहोदधेर्भिदाश्चिदात्मनो बुद्बुदवारिविस्तवः ।
अधर्ममज्ञानमभक्तिमाश्रिता न तत्त्वमेतस्य विदन्ति ये जनाः ॥१०९॥

सूत्रे—विध्यर्थवादमेरुद्धयाविवेकाद्दिग्भ्रमः १।१।३६ । व्याहताव्याहतदिगन्तराविवेकस्तत्सहभावो ज्ञानविज्ञानविप्लवहेतुः १।१।३७ ।

इति प्रथमाध्याये प्रथमाह्निकम् ।

प्रथमाध्याये द्वितीयाह्निके प्रथमाधिकरणमारचयति–

अस्ति वा नास्ति वा दिव्या दृष्टिरस्ति यया जनः ।
लेखानदृष्टान्पठति प्रतानपि च पश्यति ॥ १ ॥

---

(अ० १३) येषां सिद्धपिशाचमन्त्रसदृशे भक्तिः किल व्याहते
प्राच्योक्तेऽत्र सुरार्णवादिषु भृशं श्रद्धा तदाज्ञास्विव ।
अन्यप्रत्ययनेयताहतधियां तेषां विमूढात्मनां
दिङ्मोहाद्भ्रमतामिवानुगमनं सद्यो निपातावहम् ॥ ११० ॥

इति प्रथमाध्याये प्रथमाह्निकम् ॥

——:o:——

(अ० १) दिव्यदृष्टिरनुमैव न चान्या व्याहतिप्रणय एव तथान्यम् ।
भावि भूतमथ यच्च भवत्तद्विप्रकृष्टमनुमानविगाह्यम् ॥ १ ॥
दिव्यशक्तिविभवादनुजस्ते खे चरन्द्रुतमुपेत्ययि पश्येः ।
को निशम्य गिरमीदृशमास्ते स्वानुजेक्षणसमुत्कण्ठः ॥ २ ॥
भारतादि हि पश्यति सिद्धो हन्त सिद्धपुरवृत्तमशेषम् ।
पत्रखण्डकृतलक्ष्मणि पृष्ठे पुस्तकस्य स कथं हतदृष्टिः ॥ ३ ॥
हुं बिभेषि न कथं मम शापात्त्वमत्र ननु भक्तिविगाह्यम् ।
दाम्भिकादिति निशम्य न धृष्टस्तामसम्छति परीक्षकलोकः ॥ ४ ।

नानुमानातिरिक्तास्ति दृष्टिर्दिव्या तु का चन ।
अनुमानात्मिका सा चेदस्तु व्याप्तिग्रहादिजा ॥ २ ॥

---

भारतप्रणयनादिमहिम्ना गौरवं भरतवर्षकवीनाम् ।
सिद्धधूर्तसमजस्य महत्त्वं दिव्यशक्तिकपटाश्रयमेव ॥ ५ ॥
दिव्यशक्तिमधिगम्य तु सिद्धात्कुक्कुरोपि विदधीत निबन्धान् ।
विद्यया पुनरनल्पकसत्त्वोऽनल्पधीश्च कुरुते किल कार्यम् ॥ ६ ॥
सिद्धधूर्तवचोभिः किं श्रद्धया दिव्यशक्तिषु ।
विद्योद्योगादि संत्यज्य निराशान्कुरुषे पितॄन् ॥ ७ ॥
सर्वतो जयमन्विच्छेत्पुत्रादिच्छेत्पराभवम् ।
आशा पितॄणामित्येषा व्यर्थयेन्मूर्ख एव ताम् ॥ ८ ॥
पूर्वजानामपीशानां को दिव्यानां तुल्यतां व्रजेत् ।
पुत्रात्पराभवस्याशां तेषां कृन्तति धीरियम् ॥ ९ ॥
मायावादादिभिर्मिथ्या-प्रपञ्चैर्वञ्चितं जगत् ।
अनुद्योमपरं वन्य-विसर्पेण निपीडितम् ॥ १० ॥
प्राचीनसभ्यता तस्मिन्दुर्विसर्पे व्यलुप्यत ।
आविर्भूता नवान्यत्र भारते नोपलभ्यते ॥ ११ ॥
विद्योद्योगवतां यत्नात्सेयात्राविर्भवन्त्यपि ।
आध्यात्मिकादिवाचाट-वाक्पङ्के हा विषीदति ॥ १२ ॥
वैज्ञानिका महोद्योगा अस्तुवन्तोऽपि पूर्वजान् ।
मुखान्युज्ज्वलयन्त्येषां सत्पुत्रेऽर्हं यशः स्थिरम् ॥ १३ ॥

## सूत्रम्—न दिव्या दृष्टिरनुमानानतिरेकात् १।२।१ ॥

पितरो दिव्यशक्तित्वादनन्यासाद्यवैभवाः ।
इत्यादि कीर्तयन्युच्चः कलङ्कयति तान्कुधीः ॥ १४ ॥
न दिव्यशक्तिमत्त्वेन पितृत्वेनैव पूर्वजाः ।
पूजनीया यतस्तस्मात्स्तुतिस्तेषामनर्थिका ॥ १५ ॥
यस्तु सिद्धा इति पितॄनर्चयेन्मोहविक्लवः ।
स नीचान्सिद्धिविख्यातान्सहसा पूजयिष्यति ॥ १६ ॥
भीष्मरैभ्यहरिश्चन्द्रावरजा हि महौजसः ।
न वयं सिद्धधूर्तानां जातु सिद्धिषु लोलुपाः ॥ १७ ॥
राज्यत्यागाचाभिचाराद्भीष्मः सिद्धिं परां दधे ।
विससर्ज हरिश्चन्द्रो विभूतीः पक्वयां प्रति ॥ १८ ॥
श्रुतिदर्शनवित्तानां सूत्राम्नाययशस्विनाम् ।
भारतादिप्रणेतॄणां दायादा भारता वयम् ॥ १९ ॥
आपत्यकाशविज्ञाने कोऽर्थो जगति नः किल ।
दिव्यदृष्ट्या महामूर्ख-घूकदृष्ट्यैकगम्यया ॥ २० ॥
यन्त्रादिसाधनोपेतैरवधानपुरःसरम् ।
सूर्यादिदृष्टेर्भुवन-ज्ञानं ज्योतिर्विदां स्फुटम् ॥ २१ ॥
तत्सूर्यसंयमात्युक्तेरैदंपर्ये पतञ्जलेः ।
वैज्ञानिकानां कोऽर्थः स्याद्बिम्बचिन्तादिमात्रतः ॥ २२ ॥
बिम्बध्यानादिमात्राद्वा जगज्ज्ञानं यदीष्यते ।
प्राचीनैः, कस्तदार्थो नस्तेषां व्याहतया गिरा ॥ २३ ॥

द्वितीयाधिकरणमारचयति—

अपौरुषेयं पुरुषोद्भवं वा श्रुतिवाङ्मयम् ।
अपौरुषेयं दिव्यं स्याद्यद्वेशोद्भासितं भुवि ॥ १ ॥
मधुच्छन्दःप्रभृतिभिराम्नातं प्रथितं स्फुटम् ।
नापौरुषेयं तस्मात्तदैशं तु निखिलं जगत् ॥ २ ॥

---

अ० २) अपौरुषेयतां को नु नृगिरां भावयेत्सुधीः ।
ज्ञानस्यापौरुषेयत्वे श्रुतीनामेव तत्कथम् ॥ २४ ॥
विश्वामित्रवसिष्ठादि· प्रणीताः श्रुतयः किल ।
अग्निमीलइति स्पष्टं मानुष्यो गिरईदृशः ॥ २५ ॥
अज्ञातवक्तृकत्वाद्वा यन्त्रादेरागमाच्च वा ।
भक्तिश्चेत्सा स्वनग्राह·शब्दादावपि संभवेत् ॥ २६ ॥
विधिर्मनुष्यशब्दोत्र दिव्यमव्याहृतं मतम् ।
आसुरं व्याहृतं प्रोक्तमुपचारेण मानवैः ॥ २७ ॥
अव्याहृतानां स्वीकारं व्याहृतानां च वर्जनम् ।
वक्तारमनपेक्ष्येव शिष्टाः कुर्वन्त्यसंशयम् ॥ २८ ॥
तत्र वक्त्रनपेक्षत्वात्तद्दिव्यासुररूपणम् ।
विधेस्तु वक्त्रपेक्षत्वान्मानुषत्वमुदाहृतम् ॥ २९ ॥
अपौरुषेयता तस्माच्छ्रुतौ चेदौपचारिकी ।
तदुपादेयताहेतुर्व्याहृतेषु कथं न सा ॥ ३० ॥

सूत्राणि—नापौरुषेयो मानुषः शब्दो व्याहतेः १।२।२। न च तत्संभवेपि शब्दमाहात्म्यं कीचकध्वनिवत्स्वनग्राहवदज्ञातालेखकपत्रवच्च १।२।३। वाचि देवासुरमानुषरूपणं परमार्थव्याघातविधिलक्षणम् १।२।४। भवेदपौरुषेयत्वमप्याद्ये पुरुषानपेक्षत्वात् १।२५। तथा तु व्याघातोपि १।२६। तस्मादपौरुषेयत्वमुपादेयत्वाप्रयोजकम् १।२।७। न वाचि सर्वात्मीयत्वाद्बहुमानो-विश्वस्यैव तथात्वात् १।२।८॥

---

वाचोपदिष्टा ये मन्त्राः किलर्षिभ्योऽवरैः श्रुताः ।
ते समाम्नायविरहाच्छ्रुतयः प्रथिता भुवि ॥ ३१ ॥
ग्लायद्भिरुपदेशायाम्नाता एतास्ततोऽवरैः ।
श्रुतीः स्मृत्वा प्रणीतास्तु स्मृतयः परिकीर्तिताः ॥ ३२ ॥
सर्वात्मीयं जगत्सर्वं को विशेषः श्रुतेस्ततः ।
तस्माच्च सर्वात्मीयत्वं श्रुत्याप्तत्वप्रयोजकम् ॥ ३३ ॥
अस्य भूतस्य महतो यच्चिःश्वसितरूपणम् ।
अनुव्याख्यानपर्यन्ते तत्समस्तेपि वाङ्मये ॥ ३४ ॥
अन्ततः प्रकृतेर्ज्ञानं सर्वं प्रकृतिवीक्षणात् ।
सर्वात्मा प्रकृतिश्चेति बादरायणसंमतम् ॥ ३५ ॥
अद्वैतवादिनां भेदाः प्राकृताप्रकृतादयः ।
असंमता यतस्तस्मात्सर्वतः सत्यमादृतम् ॥ ३६ ॥

तृतीयाधिकरणमारचयति–

विध्यर्थवादयोर्भेदः स्वरूपेऽस्ति पुनर्न वा ।
न स्फुटोऽस्ति तयोर्भेदस्तस्मादयमुपेक्ष्यताम् ॥ १ ॥
आसीद्भविष्यत्यस्तीति त्र्यात्मकादर्थवादतः ।
इदं कुर्विति रूपस्य विधेर्भेदः परिस्फुटः ॥ २ ॥

---

(अ० ३) अद आसीदिदं चास्ति भविष्यत्येतदीदृशम् ।
अर्थवादाख्यया ख्यातं शब्दोऽत्र ज्ञापकः परम् ॥ ३७ ॥
इदं कुर्विति सर्वस्य विधेराकार ईरितः ।
तस्य शब्दैकमेयत्वं हेतूनां त्वर्थवादता ॥ ३८ ॥
उपपादकतैवात्र प्रामाण्यं ज्ञापनं न तु ।
प्रामाण्यमर्थवादे तत्प्रत्यक्षानुमयोः परम् ॥ ३९ ॥
अर्थ एकोऽत्र जायादेः संग्रहस्तद्विधा भिदाः ।
त्रिविकारास्वभावादो वरस्यारोहणं यतः ॥ ४० ॥
सर्वस्य स्वपिता श्रेयान्विद्वान्वा मूर्ख एव वा ।
नथैव स्वविधिः श्रेयान्सफलो निष्फलोऽपि वा ॥ ४१ ॥
स्वधर्मे निधनं श्रेयः श्रीकृष्णोऽपि जगाद्यतः ।
भ्रमयो धर्मनिःश्रेणावक्षिमीलनकेलयः ॥ ४२ ॥
अव्याहतो य आप्तस्य विधिस्तस्य फलं जनः ।
अन्विष्यन्नेव भक्त्यामुं वाग्विध्यात्त्वनुतिष्ठति ॥ ४३ ॥

सूत्राणि—शब्देऽर्थवादविधिभिन्नः १।२।६ । आसीदखि भविष्यतीत्यर्थवादः १।२।१० । भवितव्यमिति विधिः १।२।११ सा जैमिनेश्चोदना १।२।१२ । एकोऽर्थो वैकल्पिका विधयः १।२।१३ ॥

चतुर्थाधिकरणमारचयति—

सर्वाः प्रतिज्ञाः पित्रादेः स्वीकार्या वा न वा जनैः ।
स्वीकार्या एव पित्रादेराप्तत्वादखिला अपि ॥ १ ॥

---

मातापितृनृपाचार्य-विधींस्तस्मादहेतुकम् ।
अनुतिष्ठेच कुर्वीत तत्र हेतुपरीक्षणम् ॥ ४४ ॥
स्वास्थ्याय गोमयस्पर्शो बलवृद्ध्यै सुरां पिबेत् ।
तस्माद्विधिषु हेतूनां न प्रशस्ता गवेषणा ॥ ४५ ॥
(अ० ४) एकापेक्ष्योपपत्तिश्चान्यानपेक्ष्योपपत्तिका ।
परोपपत्तिविहता प्रतिज्ञा त्रिविधा ततः ॥ ४६ ॥
प्रतिष्ठापटवर्णादि रासभारोहणादिकम् ।
तथैव स्तुतिपाठाद्यमनपेक्ष्योपपत्तिकम् ॥ ४७ ॥
सर्वात्मीयेषु कार्येषु यावन्नैव क्षतिर्भवेत् ।
तावद्धेत्वनपेक्षैव कार्या तेषामनुष्ठितिः ॥ ४८ ॥
स्तुतिपाठस्य वेलायां जनेषूपप्लवो यदि ।
को वा जनपदाध्यक्षः स्तुतिपाठं न हास्यति ॥ ४९ ॥
आचारपालनं तावद्यावद्धर्मस्य न क्षतिः ।
पारमार्थिकधर्मारिमाचारं परिवर्जयेत् ॥ ५० ॥

अनपेक्ष्योपपत्तित्वाद्विधिः स्वीक्रियतां जनैः ।
अपेक्षितोपपत्तित्वादर्थवादः परीक्ष्यताम् ॥ २ ॥

---

सिद्धोच्छिष्टैर्मतैर्वृद्धिः परोक्षार्थावलोकनम् ।
उपपत्तिहतं सर्वमीदृशं दूरतस्त्यजेत् ॥ ५१ ॥
पुष्पकादिकथानां च मध्वादित्तरणस्य च ।
निवापजायास्तृप्तेश्चायुतायुष्ट्वस्य वा नृणाम् ॥ ५२ ॥
स्थितमत्युक्तिमात्रत्वं नोपपन्नं हि तादृशम् ।
उपपत्तिविरुद्धेषु श्रद्धामीदृक्षु वर्जयेत् ॥ ५३ ॥
शैलार्णवाद्यवस्थानमीदृगन्यच्च यद्भवेत् ।
तस्योपपत्तिरन्वेष्या तदपेक्ष्योपपत्तिकम् ॥ ५४ ॥
प्रत्यक्षमनुमानं वाप्युपपत्तिर्द्वयीष्यते ।
यत्र नान्यतरत्तस्य स्थितैवानुपपन्नता ॥ ५५ ॥
संभवत्येतयोर्दोषो नत्वन्या दोषवर्जिता ।
अप्रमत्तैस्तयोर्दोषापनयाय प्रवर्त्यताम् ॥ ५६ ॥
अशुचित्वादिसंबन्धः सर्वत्रैव नृणां यतः ।
अप्रमानं वा पिशाचं वा कः करोतु गुरुं ततः ॥ ५७ ॥
तथाशङ्क्य सदोषत्वं प्रत्यक्षानुमयोर्जनः ।
शब्दस्य नैव प्रामाण्यमविधौ वेत्तुमर्हति ॥ ५८ ॥
वन्ध्यापुत्रादिशब्देभ्यो न तदर्थस्य सत्यता ।
न पुष्पकादिशब्देभ्यो विमानादेश्च सत्यता ॥ ५९ ॥

सूत्राणि--प्रतिज्ञा सोपपत्तिकानपेक्षितोपपत्तिकोपपत्तिविरुद्धत्वात्त्रिविधा १-२-१४ । सा च प्रत्यक्षोपलम्भोनुमितिर्वा १-२-१५। शब्दोपलम्भः शाब्द इति चेन्न शब्दस्थितिमात्रोपपादकत्वात् १-२-१६ । न व्याहतार्थः शब्द इति चेन्न बन्ध्यापुत्रादिसत्त्वात् १-२-१७। आप्तत्वानुमानात्तदुक्तेः सोपपत्तिकत्वानुमानमिति चेन्नार्थवादे प्रमादस्य सर्वत्र संभवात् १-२-१८। अबाधादाप्तत्वं नाप्तत्वादबाधः १-२-१९ ॥

---

स्वर्णं जानन्गिरिं जानन्यथा स्वर्णगिरिं वदेत् ।
तथा विमानमाह स्म रथं चोड्डुयनं स्मरन् ॥ ६० ॥
अनुमायाप्ततां वक्तुर्वदिष्यन्सत्यवादिताम् ।
प्रमादसंभवादुक्तेः संशयार्हा न किं वदेत् ॥ ६१ ॥
न सार्वकालिकं कस्याप्याप्तत्वं दृश्यते क्वचित् ।
अबाधितार्थवक्तृत्वात्तन्मात्रे ह्याप्तता मता ॥ ६२ ॥
पित्राच्छलेन पुत्रस्य वधः पुत्रेण वा पितुः ।
कस्याप्ततां कः श्रद्दध्यान्मतिमान्सार्वकालिकीम् ॥ ६३ ॥
भक्त्या प्राणानपि त्यज्यन्गुर्वादेशेषु मानवः ।
अबाधसंभवेवेति विधो गुरुजनाप्तताम् ॥ ६४ ॥
सबाधसंभवे त्वर्थवादे कस्यापि नाप्तता ।
यावत्राबाधितोर्थस्तु निर्णीत उपपत्तिभिः ॥ ६५ ॥

पञ्चमाधिकरणमारचयति–

उपपत्तिविरुद्धस्य विधेरनुगमो न वा ।
कार्यमेवानुगमनं श्रेयसोनादरोऽन्यथा ॥ १ ॥
उपपत्तिविरुद्धस्यासंभाव्योनुगमः स्फुटम् ।
तद्वक्तुरप्यनाप्तत्वं वाचि व्याहतिदर्शनात् ॥ २ ॥

---

( अ० ५ ) अर्थवादस्ततः सर्व उपपत्तिमपेक्षते ।
उपलब्धोपपत्तेश्च सत्यता तस्य नान्यथा ॥ ६६ ॥
अनपेक्ष्योपपत्तिस्तु विधेयेन विधिर्यतः ।
सहेतुर्वाप्यहेतुर्वा सद्योनुष्ठीयते ततः ॥ ६७ ॥
उपपत्तिमपेक्ष्यापि कदाचिद्वा यदृच्छया ।
विधायकैस्तु विधयो विधेयेषु निदेशिताः ॥ ६८ ॥
भक्ष्याभक्ष्यादिविधयो हेत्वपेक्षा उदाहृताः ।
वृषचर्मासनाद्यं तु न सर्वत्र सहेतुकम् ॥ ६९ ॥
मन्त्रपाठादिभिः प्रेत-बन्धस्फोटो भविष्यति ।
नर्मदेश्वरविद्युच्च स्पर्शादक्षान्युपेष्यति ॥ ७० ॥
इत्यादि मूर्खवाचाट-पेटादीनां कुकल्पनाः ।
निरस्य तस्माच्चिहेतुर्विधेरनुसृतिर्मता ॥ ७१ ॥
उपपत्तिविरुद्धस्तु विधिर्यश्चाविधिस्तथा ।
दृष्टा न तस्यानुसृतिर्विनिपातफला हि सा ॥ ७२
तालदघ्नमणेरर्थे पितुः कूपे पतिष्यतः ।
निवारणं सुतः कुर्यात्पतनादात्मनस्तथा ॥ ७३ ॥

सूत्राणि—सोपपत्तिकोऽर्थवादः १-२-२२। विधिरनपेक्ष्योपपत्तिको विधेयस्य १-२-२१। उभयथा विधायकस्य १-२-२२। उपपत्तिविरोधादुन्मत्तप्रलापस्तस्य नानुगमो निरोधस्तु प्रमादात् १-२-२३ ॥

षष्ठाधिकरणमारचयति—

अर्थवादा असंदिग्धाः शब्दमात्रोदिता न वा ।
महतामुदिताः शब्दैरसंदिग्धाः कुतो न ते ॥ १ ॥
प्रत्यक्षमनुमानं वा न यावद्बाधवर्जितम् ।
शब्दमात्रोदितस्तावदर्थः संशयगोचरः ॥ २ ॥

सूत्राणि—अर्थवादः संदिग्धोऽसंदिग्धश्च १-२-२४। बाधसंभवे शब्दमात्रप्रतिपादने वा संदेहः १-२-२५। अबाधिते प्रत्यक्षेनुमाने वा तदभावः १-२-२६ ॥

सप्तमाधिकरणमारचयति—

अव्याहतेऽर्थवादे स्यात्संशयो व्याहतेपि वा ।
व्याहतेर्दुष्करं ज्ञानं तस्मात्सर्वत्र संशयः ॥ १ ॥

---

( अ० ६ ) असंदेहससंदेहावर्थवादौ द्विधा मतौ ।
प्रत्यक्षे वानुमाने वा निर्बाधे नैव संशयः ॥ ७४ ॥
प्रत्यक्षे वानुमाने वा संजायद्बाधसंभवे ।
संशयः शब्दमात्रोक्ते त्वर्थवादे सदोचितः ॥ ७५ ॥
( अ० ७ ) असंशयोऽपि द्विविधो भावाभावावगाहनात् ।
उपपन्नस्य भावः स्याद्व्याहतस्य त्वसंभवः ॥ ७६ ॥

एकज्ञानेपि तद्वर्ग्य-व्याहतिज्ञानदर्शनात् ।
निश्चिताव्याहतावेव संशयो नेतरत्र तु ॥ २ ॥

सूत्राणि—असंदेहो भावावगाहो १ २ १७। संदेहो व्याहति-रहिते प्रवृत्तेरबाधकः १ २ २८। व्याहतेतु सद्योऽसत्यतानिश्चयो वक्त्रादिनिरपेक्षः प्रवृत्तेर्बाधकः १ २ २९। यत्किंचिज्ज्ञानात्तद्वर्गीयव्याहतिज्ञानं तथा चारुणिः १ २ ३० ॥

---

उपपत्तिप्रतीक्षे यः संशयः समुदाहृतः ।
सोपि निर्व्याहतावेव व्याहतस्य त्वसत्यता ॥ ७७ ॥
संदिग्धेपि प्रवृत्तिस्तु स्याद्व्याहतिविवर्जिते ।
छागशार्दूलसंदेहे सखड्गः प्रविशेत्सुखम् ॥ ७८ ॥
कामं देवोपि वक्ता स्याद्व्याहते तु न सत्यता ।
असत्यत्वग्रहः सद्यः प्रवृत्तेर्बाधकश्च सः ॥ ७९ ॥
स्फुलिङ्गस्यैकस्यापि वृक्षस्य च परीक्षया ।
व्याहतं वह्निना वृक्ष-सेचनं ज्ञायते जनैः ॥ ८० ॥
ज्ञाने सर्वस्य धूमादेर्व्याप्तिज्ञानं न चान्यथा ।
इति चार्वाककल्पस्तु सर्वथा व्याहतः स्फुटम् ॥ ८१ ॥
एकस्य नखकर्तस्य ज्ञानात्कार्ष्णायसं नृणाम् ।
विज्ञातं सर्वमेव स्यादित्यारुणिरपीक्षते ॥ ८१ ॥
तद्वर्गीयस्य कस्यापि ज्ञानाद्व्याहतिदर्शनम् ।
वर्गे तस्मिन्भवत्येव निर्णयेद्व्याहतिं ततः ॥ ८३ ॥

अष्टमाधिकरणमारभ्यते—

प्रमादाद्दृष्टिभेदाद्वा वन्ध्यापुत्रगवेषिभिः ।
दृश्यते मन्त्रशक्त्यादि दृष्टिभेदादिदं भवेत् ॥ १ ॥
प्रमादादीदृशं दृश्यं प्रमादस्य च हेतवः ।
आप्तत्वकल्पना दोषा विस्मयाद्याश्च चेतसः ॥ २ ॥

---

( अ० ८ ) आप्तत्वानुमितेः सत्यं वदेदेवेति दुर्ग्रहः ।
वैज्ञानिकाद्भुतैश्चैव विस्मयाब्धौ निमज्जनम् ॥ ८४ ॥
गुणस्य लङ्घनं तर्के मध्यमस्य विपर्ययः ।
व्याहतांशानवगतिः संक्षेपो मानसस्तथा ॥ ८५ ॥
अवधानाधिकारादेरसम्यक्परिशोधनम् ।
वन्ध्यापुत्रानुसन्धान-सदसो भ्रमहेतवः ॥ ८६ ॥
युधिष्ठिरं गृहीत्वाप्तं सत्यमेव वदिष्यति ।
इतिभ्रमाद्गुरुर्द्रोणः संपराये व्यपद्यत ॥ ८७ ॥
अनुमानोपपन्नं यत्प्रत्यक्षेणोपलभ्यते ।
वैज्ञानिकाद्भुतं दृष्ट्वा कस्तद्विस्मितमानसः ॥ ८८ ॥
प्रत्यक्षेणानुमानेन स्फुटं प्रत्याहतं हि यत् ।
नृणां शिलाप्रवेशादि तच्छ्रद्धध्यानत्कथं चन ॥ ८९ ॥
गच्छाम्यहं पदशतं परः क्रोशशतं तथा ।
अवेन गतिभेदेन तर्कयेत्को नरोऽद्वयम् ॥ ९० ॥
पिता चेच्छतजीवी स्याद्दशजीवी सुतस्तथा ।
कोऽस्मात्पूर्वयुगीयानां मन्येतायुतजीविताम् ॥ ९१ ॥
मुद्रात्याद्युदयेन्मन्त्रैः स्पष्टं व्याहतमीदृशम् ।
कस्तद्दर्शनतः श्रद्धां मन्त्रशक्तौ करिष्यति ॥ ९२ ॥

सूत्राणि-वन्ध्यापुत्रान्वेषिणां प्रमादहेतवः १-२-३१। आप्तत्वा मानं प्रत्यक्षैर्विज्ञानाद्भुतैर्विस्मयपारवश्यं गुणविलङ्घी मध्यमविपर्या सर्वांश्च तर्कः १-२-३२। व्याघातांशस्य प्रच्छन्नस्यादर्शनमौत्प्रेक्षिक

---

कन्या वा विधवाः कामं सिद्धधूर्ताङ्गभस्मजान्।
ख्यापयेयुः सुतांस्तेषां जारजत्वं तु निश्चितम् ॥ ९३ ॥
महाफलानि दृष्ट्वापि न तर्कयितुमर्हति।
मन्त्रप्रेतादिजन्यानि तान्युन्मादविवर्जितः ॥ ९४ ॥
सामान्यं कारणं तेषां छलाचैव विभाव्यते।
न जारनामाज्ञानेन वैधवेयस्तु देवजः ॥ ९५ ॥
केचिज्जले स्थले वायौ यानत्रयमतर्कयन्।
मन्त्रोच्चितं रथं पश्चात्सर्वगं समकल्पयन् ॥ ९६ ॥
पादुकागुटिकाद्यैश्च संप्रत्याहुर्वियद्गतिम्।
श्रयमौत्प्रेक्षिको हन्त संक्षपो भारते स्थितः ॥ ९७ ॥
पूर्वं गवाश्वयानानि वाष्पयानं ततः परम्।
ततश्च वैद्युतं व्योम-यानं चेति महौजसाम् ॥ ९८ ॥
क्रमो द्वीपान्तरीयाणां विकासो वास्तवो यतः।
चतौजसां व्यथामेव नूनं मार्गो विधास्यति ॥ ९९ ॥
विनाधिकारभूम्यादि-शुद्धिं यो हेतुनिर्णयः।
कः श्रद्दधीत प्रेक्षावांस्तस्मिन्बालिशजल्पिते ॥ १०० ॥

कुतुकजातमिदं किल दृश्यते ननु मनूनयि विश्वसितोद्धताः।
इति सदर्पमुदीरयतो द्रुतं घनविशोधनमेव परीक्षणम् ॥ १०१ ॥
विषचिकित्सनमक्षरचोदनैः सजलसेकमुपक्रमते जनः।
यदि तदाक्षरचोदनवर्जितः किमु विधिर्न स एव विधीयते ॥ १०२

संक्षेपोऽधिकारस्साधनावधानभूम्याद्यशोधनं च १-२-३३। उत्पादने घनाविशोधनम् १-२-३४। मन्त्रे जाङ्गलाविदा विषबलापरीक्षणं निर्मन्त्रक्रियाफलादर्शनं च १-२-३५। परोक्षज्ञाने पत्राङ्कादिसुखनिर्णयप्रश्नानुपन्यासः १-२-३६। योगेवान्तरोपायानपेक्षादि १-२-३७। एतेनेदृशं सर्वं व्याख्यातम् १-२-३८॥

इति प्रथमाध्यायस्य द्वितीयाह्निकम्।

---

विषबलेऽल्पतरे किल जीवनं मरणमेव सुनिश्चितमन्यथा।
इतविशेषवशेन रुजः कथं प्रतिविधानमिदं परिभावय॥ १०३॥
अहमिह स्थित एव जगद्गतं निखिलवृत्तमवैमि परीक्ष्यताम्।
इति वदन्कितवः सुखनिर्णयं किमपि सन्त जनैः परिपृच्छ्यताम्॥१०४॥
ननु पुरः परिपश्यसि पुस्तकं मम करे कृतलक्ष्म तदुच्यताम्।
कितव हे कतिथे खलु पृष्ठके तदिह-लक्ष्म कथं त्वसि मौनवान्॥१०५॥
असुनिरोधविधेः करिणो बलं सकलभूतरुतावगमस्तथा।
इति वदन्नवधानवतां परं फलमिति स्फुटमाह पतञ्जलिः॥ १०६॥
अवहितस्य फलं जगतो मतं न पुनरस्त्यवधानवतामपि।
फलमनुत्तममाश्रयतां भवेरवहितो महितोत्तमतत्परः॥ १०७॥
इति कितवचरित्रं जानता मानवेन स्फुटमतिशयचित्रं दृष्टमप्यज्ञलोकैः।
न किल फलमुपेयं व्याहतं हुंकृतादेरभिमतपरमार्थः किं नु रज्येदनर्थे॥१०८॥

इति प्रथमाध्यायस्य द्वितीयाह्निकम्॥

---

द्वितीयाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति-

परिच्छिन्नोस्ति वान्यादृक् सर्वात्मा भगवानयम् ।
स्वापतेयः परिच्छेदः सर्वथास्योपपद्यते ॥ १ ॥
असामञ्जस्यतः पत्युः स्वयमेवायमोशिता ।
परिच्छेत्तुरभावाच्च नेयत्तास्योपपद्यते ॥ २ ॥

सूत्राणि-आकाशत्वक् सहस्रशीर्षा सर्वात्मा २-१-१। आकाशः प्रकाशधर्मावकाशमात्रगोनन्तः २-१-२। तस्मिन्त्सागरइव द्वीपान्यसंख्यानि विश्वानि २-२-३। ते बिन्दवो बुद्बुदावा सर्वात्ममहोदधेः २-१-४। अंशतो ज्ञातमिदमेकम् २-१-५॥

---

वार्तिकानि—

(अ०१) अनन्तमाकाशमिदं पयोधेर्द्वीपैरिवाम्भो निचितं च विश्वैः ।
एकस्य तत्रास्मदुपाश्रयस्य प्रस्तूयते वर्णनमत्र किंचित् ॥ १ ॥
ताराग्रहोपग्रहकेतुजातैः परस्पराकर्षणनिघ्नचारैः ।
विचित्रवर्णाकृतिभिः समन्ताद्व्याप्तं विशालं किल विश्वमेतत् ॥ २ ॥
धराभितो वर्तुलकल्परूपा कदम्बकिञ्जल्कनिभाश्च तस्याम् ।
देशेष्वनेकेषु कृताधिवासाः सर्वत्र खं मूर्ध्नि विलोकयन्ति ॥ ३ ॥
आकृष्टिशक्त्याखिललोकभाजा धरातलाद्गच्छति खं न किंचित् ।
अधार्यमाणां सलिलानिलाद्यैस्तस्माच्च कस्यापि निपातशङ्का ॥ ४ ॥
भूकेन्द्रपातित्वमधोनिपातः खसंमुखीना गतिरूर्ध्वगत्वम् ।
अतो धरार्धान्तरचारभाजां निपातशङ्कोर्ध्वगतित्वबुद्धिः ॥ ५ ॥
प्रकाशधर्मण्यवकाशमात्र-व्यापिन्यथाकाश उदीक्ष्यमाणे ।
दृष्ट्या स्वया यन्त्रसहायया वा यदीक्ष्यते तस्य विचारणात्र ॥ ६ ॥

द्वितीयाधिकरणमारचयति—

ग्रहादेः पुरुषाधीनाकृष्ट्यधीनाथवा गतिः ।
स्याद्गतिः पुरुषाधीना रथादौ दर्शनात्तथा ॥ १ ॥
जलादावन्यथा दृष्टेर्न गतिः पुमपेक्षिणी ।
नियम्ये चेतनापेक्षा नियतेस्त्वनपेक्षता ॥ २ ॥

सूत्राणि—तस्मिंश्छायापथताराग्रहोपग्रहकेतवः प्रधानानि प्रमेयस्थानानि २-१-६ । स्वाधाराः परस्पराकृष्टिनिघ्नचाराः सर्वे २-१-७ । आकृष्टिर्मानानुलोमा विप्रकर्षप्रतिलोमा च २-१-८ ॥

तृतीयाधिकरणमारचयति—

छायापथादयः सर्वे गतिमन्तोन्यथाथ वा ।
भूगतेर्गतिभानं स्याद्गतिष्वप्यमोऽवलम् ॥ १ ॥

---

( अ० २ ) मानानुलोमा किल विप्रकर्षवतीपगाकर्षणशक्तिरव ।
स सर्वगा सर्वगतिस्थितीनां निमित्तमेवेति वदन्ति तज्ज्ञाः ॥ ७ ॥
( अ० ३ ) स्फुरत्पयः फेनचयावभासश्छायापथो दूरतमः पृथिव्याः ।
दृश्यः क्व चित्तारकितः परत्र सिताभ्रसंघातनिभः प्रसिद्धः ॥ ८ ॥
शुभ्राभ्रकाञ्चीप्रतिमः प्रवेष्ट्य तारादिकं व्योम्नि विभासमानः ।
छायापथोयं विपुलोस्ति वाष्पावस्थास्थितो द्रव्यचयश्चिरन्नः ॥ ९ ॥
घनीभवद्वाष्पचयादमुष्मात्कालेन तारानिकरो विजज्ञे ।
ततो ग्रहोपग्रहवर्ग आसीदुत्प्रेक्षितं कैश्चिदिदं सुधीभिः ॥ १० ॥
स्वयंप्रकाशा निरपेक्षचाराः सूर्या असंख्या निजमण्डलस्य ।
केन्द्रस्वरूपा विचरन्ति तेषां ताराख्यया सर्वजने प्रसिद्धिः ॥ ११ ॥

३

आकृष्टेरनिवार्यत्वात्सर्वेपि गतिशालिनः ।
परिवृत्तिर्धरापेक्षा धरागमनहेतुका ॥ २ ॥

सूत्राणि—छायापथेोतिविप्रकृष्टः २-१-६। तस्मिंस्ततः पृथक्
च सूर्याः सूर्येतरानिघ्नचारास्ताराख्याः २-१-१० । सूर्यस्तारेत्य
नर्थान्तरम् २-१-११ । तद्वर्गाः सप्तर्षिप्रभृतयः २-१-१२ । सर्वे
सगतिकाः २-१-१३ ॥

---

अवाञ्चरन्तोपि विहायसीमे तापप्रकर्षात्प्रचुरप्रकाशाः ।
स्थिरा इवेक्ष्यन्त उदोर्णवेगाः पोता इवाम्भस्यतिविप्रकर्षात् ॥ १२ ॥
तेषां धराया अतिसंनिकृष्टस्तापप्रदोयं किल सूर्य एकः ।
अन्ये तु सूर्या अतिविप्रकृष्टाः स्फुरन्ति रात्रा दिवसे त्वदृश्याः ॥ १३ ॥
श्वेतारुणश्यामलपीतधूम्र-नीलादिवर्णा बहुशोत्र ताराः ।
काश्चित्पृथक्चारभृतः परास्तु संबद्धचाराः सुधियां प्रसिद्धाः ॥ १४ ॥
विद्वत्सु तारानिकरस्य वर्गाः सप्तर्षिमुख्याः प्रथिता अनेके ।
वर्गक्रमेणैव सुखेन तासां विशेषविज्ञानविधिः सुसाधः ॥ १५ ॥
तच्चक्रशिशुमारशिफाः सुमेरुसविधेऽत्वगतिवृत्ते ।
वीणाऽजानुगमुकुटं रूपकश्वयुगर्वयो वनोतुश्च ॥ १६ ॥
चित्रकमेलकश्यप-गोधाहंसाः शिवा परे वृत्ते ।
गरुडनरेन्द्रभुजङ्गाः करिमुण्डः सिंहशावकः सूतः ॥ १७ ॥
पर्शुत्रिकोणदोला वाज्यश्वतरी तिमिर्बाणः ।
एते तृतीयवृत्ते चतुर्थवृत्ते तु राशयः प्रथिताः ॥ १८ ॥
सरटहृदाद्विघटिकाः सुवर्णयष्टिः कपोतश्च ।
पोतशलाकाष्टाश्वं कुमेरुसविधेऽत्वगतिवृत्ते ॥ १६ ॥

चतुर्थाधिकरणमारचयति—

तारणां स्वप्रकाशत्वं रविभास्यत्वमस्ति वा ।
तापस्यानुपलम्भात्ता रविभास्या ग्रहादिवत् ॥ १ ॥
स्वप्रकाशा इमे सूर्यास्ताराख्यास्ततमण्डलाः ।
रवितोऽप्यतिदूरत्वान्नासां तापोऽनुभूयते ॥ २ ॥

सूत्राणि—भूमेः संनिकृष्टतमस्तापदः सूर्योऽयमेकः २-१-१४ । तस्य मध्यमो भूविप्रकर्षः कोटिः सांघ्रचष्टिलक्षा २-१-१५ । प्रभाया विकलया संचारः सांघ्रित्रयोविंशतिसहस्राणि २-१-१६ ।

---

वृत्तत्र्यस्रमयूराश्चतुरस्रं श्येनिका सरिच्च शशः ।
शुनकास्त्रिशङ्कुपुच्छौ सुपर्ण इति च द्वितीयवृत्ते तु ॥ २० ॥
मत्स्यिपवृक्षवेदिदूरेक्षणकोटीराणि सिन्धुश्च ।
सूक्ष्मेक्षणमपि सारस-शकुलौ टङ्कस्तिमिंगिलो व्याधः ॥ २१ ॥
शङ्गी शर्वशिशुः श्वेपश्चमसः काकस्तृतीयवृत्तागताः ।
ज्योतिर्गणिताभिज्ञैरिति तारावर्गसंग्रहो विहितः ॥ २२ ॥

( अ० ४ ) सांघ्र्यष्टिलक्षान्वितकोटिमानो रवेर्भुवो मध्यमविप्रकर्षः ।
ततः प्रभायाति धरां कलाभिरष्टात्मिकाभिर्महनीयवेगा ॥ २३ ॥
सांघ्रित्रयोविंशतिसंमितानि प्रभा सहस्राणि तु योजनानाम् ।
कालेन सैषा विकलात्मकेन चरत्युदग्रेण जवेन युक्ता ॥ २४ ॥
शङ्कुद्वयादप्यतिविप्रकृष्टास्ताराभुवो या अतिसंनिकृष्टाः ।
लब्धांशयैरतिविप्रकृष्टास्तमेति तारानिकराद्विहास्मान् ॥ २५ ॥
तद्विप्रकर्षातिशयाच्च तापः प्रभा परं भूमिमुपैति ताभ्यः ।
ज्ञाताश्च सूर्यस्य ततो ग्रहाख्या न तारकाणामतिविप्रकर्षात् ॥ २६ ॥

शंकुद्वयाधिकः संनिकृष्टतमताराविप्रकर्षः २-१-१७। अतिविप्रकृष्टेभ्योऽर्धलक्षेण भूप्राप्तिर्विप्रकर्षमवगमयति २-१-१८। तस्मात्तेभ्यः प्रभामात्रागमो न तापाधिगमः २-१-१९। सूर्यस्यास्य ग्रहादयो ज्ञाताः संनिकर्षान्नान्येषामतिविप्रकर्षात् २-१-२०।

पञ्चमाधिकरणमारचयति—

ग्रहैः सह रविः पृथ्वीं परिगच्छति वा न वा।
परिगच्छन्नविद्दिष्टः कान्या स्यात्तत्र कल्पना॥ १॥
महीग्रहो ग्रहैरन्यैः सह पर्येति भास्करम्।
अयनर्तूपरागादि सर्वमित्थं समञ्जसम्॥ २॥

---

( अ० ५ ) सूर्यः प्रसिद्धो निरपेक्षचारस्ताश्चप्रचारा ग्रहनामभाजः।
उपग्रहास्तु ग्रहनिघ्नचारा ग्रहाः सपुच्छा इति केतुसंज्ञाः॥ २७॥
बुधकविक्षितिभौमबृहस्पतीञ्शनिमथाप्युरणं वरुणं तथा।
त्रिदुरिहाष्ट रवेर्महतो ग्रहानुपग्रहस्वलघुग्रहसंयुतान्॥ २८॥
शून्ये त्रये तद्द्विगुणेषु चैवं चतुर्युतेषु ग्रहविप्रकर्षः।
तं प्रायिकं केचिदुदाहरन्ति न विप्रकर्षो नियमेन बद्धः॥ २९॥
द्वासप्तत्या युक्ता त्रिशती व्यासो बुधस्य संकलितः।
योजनचतुष्टयं किंयदूनं कक्षागतेर्वेगः॥ ३०॥
सार्धे लक्षचतुष्टमस्य रवेर्मध्यमन्तरं प्रोक्तम्।
प्रायोऽष्टाशीत्याह्नां सूर्यं परितः परिभ्रमणम्॥ ३१॥
शुक्रस्यार्धशतोनं सार्धत्रियुतं सहस्रकं व्यासः।
अर्द्धं चूनयोजनत्रयमस्य च कक्षागतेर्वेगः॥ ३२॥
सचतुर्लक्ष प्रयुताष्टकं पुनः साष्टसाहस्रम्।
सार्धद्विशतपञ्चयुक्तं रवितः शुक्रस्य मध्यमन्तरं प्रोक्तम्॥ ३३॥
प्रायः सपञ्चविंशति-दिनशतयुग्मेन तु भ्रमणम्।
शुक्रस्य तत्त्वमित्थं ज्योतिर्विद्भिर्निर्णीतम्॥ ३४॥

सूत्राणि—सूर्याधीनचारा ग्रहा लघवो महान्तश्च तं परियन्ति २-१-२१ । ईदृशाचारादयनतुं परागादि २-१-२२ । महान्तोष्टौ वुधः शुक्रो भूमिर्भौमो जीवः शनिररुणो वरुणश्च २-१-२३ । क्रमतो वर्धमानायामास्तत्कक्षा दीर्घवृत्ताकाराः २-१-२४। सूर्यः केन्द्रान्यतरः २-१-२५। भौमजीवयोर्मध्ये लघुग्रहाः परःशताः शचीरमाद्याः २-१-२६ ॥

षष्ठाधिकरणमारचयति—

केतवो विविधाकाराः सौरा आगन्तवोऽपि वा ।
निश्चिता न गतिस्तेषां तस्मादागन्तवस्त्वमी ॥ १ ॥

---

सार्धदशोनसहस्रं भूमेर्व्यासोऽत्र संकलितः ।
प्रायः शुक्रसमानस्तस्याः कक्षागतेर्वेगः ॥ ३५ ॥
साङ्घ्र्यष्टिलक्षयुक्ता कोटिर्मध्यान्तरं रवितः ।
प्रायः सपञ्चषष्टि-त्रिशतदिनैस्तत्परिभ्रमणम् ॥ ३६ ॥
अर्धसहस्रं महार्धोनितचत्वारिंशदन्वितं व्यासः ।
भौमस्य किंचिदूनं द्वितयं कक्षागतेर्वेगः ॥ ३७ ॥
कोटिः सप्तप्रयुतानि सप्तलक्षाण्ययुतमेकम् ।
सार्धशतषट्कसहितं सहस्रयुग्मं च मध्यमन्तरं रवितः ॥ ३८ ॥
सप्ताशीतिसमन्वित-दिनशतषट्केन तत्परिभ्रमणम् ।
भौमग्रहस्य तत्त्वं तदिदं ज्योतिर्विदामिष्टम् ॥ ३९ ॥
सार्धद्व्यशीतियुक्तं सप्तशताढ्यं क्षितायुतं व्यासः ।
जीवस्य योजनमितः कलितः कक्षागतेर्वेगः ॥ ४० ॥
सचतुर्लक्षं साष्टायुतं सहस्रान्वितं शतैः षड्भिः ।
सार्धैर्भिरुपेतमन्तरमस्य चतुर्भिः सहस्रैस्तु ॥ ४१ ॥
सार्धद्वात्रिंशद्युत-शतत्रयाढ्यैर्दिनैः परिभ्रमणम् ।
जीवग्रहस्य तत्त्वं ग्रहवेदिभिरिति विनिर्णीतम् ॥ ४२ ॥

केचिन्निर्णीतगतय इतरेन्यादृशा अपि ।
केचिदागन्तवः केचित्सौरा इति विनिर्णयः ॥ २ ॥

---

शतनवकं नवसहितं व्यासस्तु शनिग्रहस्य संकलितः ।
योजनचरणत्रितयं कक्षागतिवेग एतस्य ॥ ४३ ॥
एकादशकोट्योऽष्टभिराढ्या लक्षैस्तथाष्टभिस्त्वयुतैः ।
सचरणसहस्रसप्तोपेता मध्यान्तरं रवितः ॥ ४४ ॥
षष्ट्याढ्यसप्तशतयुतमयुतं भ्रमणस्य कालोह्नाम् ।
इतिशनितत्त्वं गणिताचार्यैर्निरणीयत स्पष्टम् ॥ ४५ ॥
उरणस्य नवाढ्यशतोपेतो व्यासश्चतुः सहस्रमितः ।
प्रायोर्धयोजनमितः कलितः कक्षागतेर्वेगः ॥ ४६ ॥
सत्रिप्रयुता द्वाविंशतिकोट्योयुतनवकयुक्ताः ।
सार्धसहस्रोपेता रवितो मध्यान्तरं तस्य ॥ ४७ ॥
त्र्यंशान्वितषडशीत्या युक्तैः शतपञ्चकाढ्यैश्च ।
त्रिंशत्सहस्रदिवसैः सूर्यं परितः परिभ्रमणम् ॥ ४८ ॥
अष्टाविंशत्यन्वित-सप्तशताढ्यं सहस्रकत्रितयम् ।
सत्र्यंशं वरुणस्य व्यासो वेगस्तु योजनत्र्यंशः ॥ ४९ ॥
कोट्यस्तु चतुस्त्रिंशत्ययुतानि नवैव पञ्च लक्षाणि ॥
षट्सहस्रसमेतायुतपञ्चकाढ्यानि चान्तरं रवितः ॥ ५० ॥
सत्र्यंशद्व्यसप्ताशीतियुतैः षट्सहस्रदिनैः ।
सूर्यं परितो भ्रमणं वरुणस्योक्तं विपश्चिद्भिः ॥ ५१ ॥
( श्लो० ६ ) ग्रहाः प्रभापुच्छभृतोऽतिदीर्घैर्वृत्तैर्भ्रमन्तः परितः स्वसूर्यम् ।
उल्काः सृजन्तः पथि केतुसंज्ञाः परःसहस्रा गगने चरन्ति ॥ ५२ ॥
सूर्यान्तरं केऽपि परिभ्रमन्तः सौरेऽत्र लोके विरलोपलम्भाः ।
परिभ्रमन्तो रविमेतमेव प्रायस्त्वनेकेऽत्र भवन्ति दृश्याः ॥ ५३ ॥

सूत्रे—सप्रभापुच्छा अनतिघना अतिदीर्घतरवृत्तगाः सौरा आगन्तवश्च केतवः २-१-२७। ते वाष्पीयाश्छायापथांशवत् २-१-२८

सप्तमाधिकरणमारचयति—

चन्द्रोयमेकः एत्रास्ति वहवस्तादृशा उत ।
एकस्यैवोपलम्भेन बहूनां कल्पना कुतः ॥ १ ॥
ग्रहाधीनगमाश्चन्द्रा उपग्रहपराभिधाः ।
दूरवीक्षणदृश्याश्च षड्विंशतिरिह स्थिताः ॥ २ ॥

सूत्रं—ग्रहाधीनचारा उपग्रहाश्चन्द्राख्याः २-१-२९। एको भूवरुणयोर्द्वौ भौमस्याष्ट जीवस्य चत्वार उरणस्य दश शनेर्विदिताः २-१-३० ॥

अष्टमाधिकरणमारचयति—

भूगर्भे मेरुशृङ्गादौ ग्रहेष्वन्येषु वा क्व चित् ।
स्युर्वा न वा स्वर्गनिरयाः, स्युरेवोक्ताश्चिरंतनैः ॥ १ ॥

---

( अ० ७ ) एको भुवो द्वौ च कुजस्य चन्द्रौ वृहस्पतेरष्ट शनेर्दशात्र ।
चत्वार एवोरणकस्य दृष्टा एकोद्य यावद्वरुणग्रहस्य ॥ ५४ ॥
( अ० ८ ) नैव नाकनिरयादिकस्थितिस्तारकादिषु किलोपपद्यते ।
दिव्यदृष्टिगगनारविन्दिनीमन्तरेण न च वीक्ष्यतेपि सा ॥ ५५ ॥
नापि सा विनिरदिश्यत स्फुटं तारकादिषु विभज्य सूरिभिः ।
कल्पनेयमसमञ्जसा कवि-स्वप्नमोदकसमेति निश्चयः ॥ ५६ ॥
केन्द्रमात्मवसतिग्रहस्य यज्जन्मिनामिदमधस्तनं सदा ।
ये विपत्यय परे ग्रहादयस्ते तु शश्वदुपरि प्रसर्पिणः ॥ ५७ ॥

व्यापित्वात्परिणामस्य दुःखादेर्नित्यसंकरात् ।
लोकान्तरेऽमरत्वादि-वर्णना कविकल्पना ॥ २ ॥

सूत्राणि—असदनीदृशेषु निर्दिष्टम् २-१-३१ । एतेषूर्ध्वाधोभेदः सुखाद्यतिशयश्चकवीनामुत्प्रेक्षा २-१-३२ । तथा पुत्रत्वगुरुत्वयुद्धहेतुत्वादिकल्पना नराकारादिकल्पना च २-१-३३ ॥

नवमाधिकरणमारचयति—

व्यक्ता सर्वेषु लोकेषु भवेज्जीवस्थितिर्न व ।
तैजसादिभिदायोगाद्व्यक्ता सर्वत्र सा भवेत् ॥ १ ॥
तप्तपिण्डे रविनिभे शीते च शशिना समे ।
व्यक्ता जीवस्थितिर्नैव, शीतोष्णे सा क्षिताविव ॥ २ ॥

---

अस्तु कस्य तदिहोर्ध्वलोकता कस्य वा पुनरधस्तनी स्थितिः ।
संपदाद्यतिशयोनुमीयतां कीदृशः कथमथोर्ध्वचारिषु ॥ ५८ ॥
मङ्गलः क्षितिसुतो बृहस्पतिर्नाकनायकगुरुर्नराकृतिः ।
भूमिसाम्यगुरुतादिहेतुका इत्यमूः कविकुलस्य कल्पनाः ॥ ५६ ॥
( अ० ६ ) केतुतारकशशिग्रहादिक-व्यक्तिपूष्वजडमिश्रता स्थिता ।
जीवशक्तिरिह तद्भिदानुगा तद्भवस्थितिमिमां विदुर्बुधाः ॥ ६० ॥
अन्तरूष्मसु बहिर्जडास्विह व्यक्तिषूद्भवति जीवसंततिः ।
बाह्यतापविगमे हि भूग्रहः प्राणिनां क्रमविकासमादधे ॥ ६१ ॥
या महोष्ममयविग्रहाः पुनर्व्यक्तयो रविनिभाश्चरन्ति खे ।
बाह्यतापविगमप्रतीक्षिणी जीवशक्तिरधुनाऽसु कल्प्यते ॥ ६२ ॥
याः पुनः शिशिररश्मिशीतलास्ताश्चिराय गतजीवशक्तिकाः ।
प्राणिनां न पुनरेकतः खगात्संक्रमः किल परत्र संगतः ॥ ६३ ॥

सूत्राणि- शीतोष्णोष्णशीतभेदः सर्वत्र २-१-३४। जवव्यक्तिः शीतोष्णेषु पृथिव्यामिव २-१-३५ । उष्णेष्वव्यक्ता जीवशक्तिर्यथा सूर्ये २-१-२६। शीतेषु नष्टा यथा भूमिचन्द्रे २-१-३७।

दशमाधिकरणमारचयति=

वैज्ञानिकैर्यत्प्रकृतेस्तत्त्वमत्र विनिश्चितम् ।
तत्प्रत्यक्षानुमानाभ्यां शब्दमात्राश्रयेण वा ॥ १ ॥
शब्दमात्राश्रयेण स्यात्पौराणिककथादिवत् ।
नोपपन्नमिदं शब्दो मानं नैवाविधौ यतः ॥ २ ॥

सूत्र–तदुपलम्भः प्रत्यक्षानुमानाभ्याम् २-१-३८। विस्तरो वाङ्मयमहार्णवेन्यत्र च २-१-३६ ॥

इति द्वितीयाध्याये प्रथमाह्निकम् ।

---

( अ॰ १० ) अर्थजातमिदमीदृशं बुधैर्हेतुसंगतमतर्कनापद्यैः ।
नत्वतोन्द्रियखपुष्पदर्शिभिर्दिव्यदृग्भिरपरोक्षमर्मभिः ॥ ६४ ॥
कौतुकाय सुधियामयं कियान्दर्शितः प्रकृतितत्त्वसंग्रहः ।
विस्तरार्थिभिरलं वगाह्यतां वाङ्मयार्णवतरङ्गमालिका ॥ ६५ ॥

इति द्वितीयाध्याये प्रथमाह्निकम् ।



# द्वितीयाध्याये द्वितीयाह्निके

प्रथमाधिकरणमारचयति—

अन्वेष्यहेतुः सृष्टिः स्यात्सादिरार्हो तु शाश्वती ।
सादिः स्यान्निर्मितेशेन नहि किञ्चिदहेतुकम् ॥ १ ॥
सृष्टिवैचित्र्यतः पूर्वाद्वैचित्र्यान्तरनिःसृतिः ।
सा कीदृगिति विज्ञानं कुतः सेत्यज्ञकौतुकम् ॥ २ ॥

सूत्राणि—शाश्वतं विश्ववैचित्र्यमगम्यबीजं तथा च श्रुतिः। २-२-१ । व्यक्तेस्तु सादित्वं सान्तत्वं च । २-२-२ । न कस्मादिति विज्ञानविषयः कीदृगिति सः २-२ ३ ॥

---

( अ० १ ) शाश्वती किल जगद्विचित्रताऽवैतु हेतुमदसीयमत्रकः ।
आदिमन्तमपि तत्र केवलं व्यक्तयो दधति तद्द्वयोज्झिते ॥ १ ॥
कीदृगत्र ननु तत्वमित्ययं भाति शास्त्रविषयः परिस्फुटम् ।
इत्थमेतदथ नान्यथा कुतः कस्य तर्कविषयो भवेदसौ ॥ २ ॥
द्रावयत्यहिमदीधितिर्हिमं वारि शोषयति चेति दृश्यते ।
नान्यथैव नियमः किमित्यमूं के समादधतु वा कुकल्पनाम् ॥ ३ ॥

द्वितीयाधिकरणमारचयति—

क्षीराब्धिनिरूपणं क्व स्यात्पार्थिवे वा पयोनिधौ ।
वियच्चरे वा कस्मिंश्चित्पार्थिवे स्यात्तथोक्तितः ॥ १ ॥
क्षित्यादिविश्वाधारस्य विष्णोर्यदयमाश्रयः ।
छायापथोऽतः क्षीराब्धिरस्य विश्वस्य वेष्टनम् ॥ २ ॥

सूत्राणि—सर्वात्मन्यक्षर ओतश्च प्रोतश्चाकाशइति याज्ञवल्क्यः । २-२-४ । तदेतद्विश्वोपाश्रिमद्विष्णुपदं क्षीराब्धिनिभेन च्छायापथेन वेष्टितम् । २-२-५ । छायापथशकलानां वियति प्लवनं मेघानामिव वायुमण्डले । २-२-६ ॥

तृतीयाधिकरणमारचयति—

ब्रह्मा स्यात्पुंविशेषोऽवान्यो वा, स्यात्सपुमान्ध्रुवम् ।
कुलालवद्धि सर्वं स निर्मिमीते महोद्यमः ॥ १ ॥

---

(अ० २) अक्षरात्मनि वियच्चिदात्मके प्रोतमोतमिति यज्ञवल्क्यजः ।
विश्वमेव वियदाश्रयं स्फुटं शाश्वताखिलविचित्रता गतम् ॥ ४ ॥
विश्वमेकमिदमस्मदाश्रयो यद्वियत्तु तदुपाधिकं स्थितम् ।
तस्य विष्णुपदवाच्यता स्फुटं व्यापिता वियति सर्वसंमता ॥ ५ ॥
वेष्टितं च तदनातपाध्वना क्षीरवारिधिनिभेन सर्वतः ।
तप्तबाष्पपटलैरसंख्यकैर्व्याप्तमस्य शकलैरितस्ततः ॥ ६ ॥
(अ० ३) तप्तबाष्पपटलादथेद्धृतात्सारमग्रमुदभूत्पुरातनम् ।
ब्राह्ममण्डमिति यद्विपश्चितः कीर्तयन्ति महता गिरागमाः ॥ ७ ॥

उद्यन्नरुणपद्मेसौ ब्रह्मा सूर्यो न संशयः ।
हिरण्मयमृताण्डस्य स गर्भः स्वयमुद्बभौ ॥ २ ॥

सूत्राणि-कुतश्चिच्छायापथशकलाद्विष्णुपदे प्रतप्ततेजोमयाद्रविकेन्द्रकमिदमण्डम् । २-२-७ । हैमं रवितेजसा । २-२-८ । तत्परिच्छिन्नस्य विष्णुपदस्थ नाभावरुणपद्माश्रयो रविः । २-२-९ । स बृहत्त्वाद्ब्रह्मा प्रथुनाधिकभूमिसमः परितस्तेजोमयत्वात्सर्वतोमुखः । २-२-१० । सर्वशक्तिमयेन धाम्ना विश्वसृट् स्वयम्भूः । २-२-११ । अनेके ब्रह्माणोनेकानि च ब्रह्माण्डानि । २-२-१२ । प्रतिरोमकूपं सर्वात्मन इति कवयः । २-२-१३ ॥

---

तद्भभज्यत च यात्यनेहसि प्रादुरास च रविस्तदन्तरे ।
त्रुट्यतश्च परिधेर्ग्रहादयो जज्ञिरेस्य वियदङ्गणाश्रयाः ॥ ८ ॥
इत्थमेव तपनो मताण्डजो रश्मिभिश्च किल सर्वतोमुखः ।
एष सौरजगतश्च सर्जनाद्विश्वसृड्विदित एष च स्वभूः ॥ ९ ॥
अप्रमेयमकनात्मपूरुषे रोमकूपसमविश्वमण्डले ।
कत्यमी किल मरीचिमालिनस्तत्प्रसह्य तु परिच्छिनत्तु कः ॥ १० ॥
(अ० ४) भज्यमानपरिधावथाण्डके तस्य केन्द्रमभवद्विभाकरः ।
सृज्यते स्म च ततः क्रमाद्ग्रहोपग्रहादिनिकरो नभोङ्गणे ॥ ११ ॥
निःसरत्सु रवितो ग्रहेष्वयं भूग्रहोपि समये विनिर्गतः ।
तप्तवाष्पमयपिण्डतां दधत्प्राणिमर्त्यस्थितिविरोधिनीं चिरम् ॥ १२ ॥
वाष्पवायुमयतेजसः शनैरूष्मनिर्गमभवैस्ततो घनैः ।
सान्द्रवारिपरिणामिभिः कृता भूरियं सलिलपूरसंभृता ॥ १३ ॥

चतुर्थाधिकरणमारचयति—

य औपनिषदः सर्गस्तस्य वैज्ञानिकाद्विदा ।
समन्वयो वा, भेदः स्याद्भूतादिक्रमभेदतः ॥ १ ॥
वैचित्र्ये शाश्वतेप्यत्र व्यक्तेः सर्गक्रमः स्थितः ।
समन्वयश्च तत्रास्ति प्राचां वैज्ञानिकैः सह ॥ २ ॥

सूत्राणि—तदण्डं क्रमाद्व्यभज्यत केन्द्रग्रहोपग्रहादिषूक्तेषु । २–२–१४ । ग्रहादिषु तेजसो वाष्पवायोर्वा शनैरूष्मनिर्गमे पामुद्भवः । २–२–१५ । तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवदिति वाजसनेयिनः । २–२–१६ । आन्तरोष्मार्णवयोर्युद्धादुद्भेदाः । २–२–१७ । सेयं तप्तकेन्द्राश्मीभवच्छरा क्रमाविर्भवज्जीवविकाशा । २–२–१८ । तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोद्भ्यः पृथिवी

---

सान्द्रतां यति च वारिणः शरे प्रस्तरीभवति सागरैर्नगैः ।
व्यज्यमानविलसन्नतोन्नता कामिनीव वसुधा व्यराजत ॥ १४ ॥
आन्तरोष्मपयसोरभूद्यतो भूदरे व्यतिकरो भयङ्करः ।
पावकोग्रदृषदुद्भिदास्ततो निस्तरा उदभवन्यतस्ततः ॥ १५ ॥
सेयमुच्चगिरिस्तना मही मातरिश्वपरिवेषगुण्ठना ।
प्राप्य वारितरलाम्बराम्बुधेर्भर्तुरङ्कमरुचत्स्वयं वरा ॥ १६ ॥
तप्तकेन्द्रपिठरा शिलास्तरप्रायवारिशरवेष्टनोद्धता ।
भूरभूत्क्रमविकाशशालिभिर्भूरिजीवनिकरैरथाञ्चिता ॥ १७ ॥
एवमेव सकलात्मनि स्फुटं सर्ग औपनिषदैरथीरितः ।
खानिलाग्निसलिलावनिक्रमादुद्भिदादिपरिणामनिर्भरः ॥ १८ ॥

पृथिव्या ओषधय ओषधिभ्यो भूतानीति तैत्तिरीयाः २-२-१६
सदेव सोम्येदं तत्तेजोऽसृजत तदपोऽसृजत तदन्नमसृजतेति
च्छन्दोगाः २-२-२० । अन्नमत्र पृथिवीति बादरायणः । २-२-२१ ।
एतेनामूलकल्पनोक्तिर्नव्यानां नराकारोक्तिश्च मध्यमानां निरस्ता
२-२-२२ ॥

पञ्चमाधिकरणमारचयति—

महाकल्पादयः प्राचां सार्था याहच्छिका उत ।
याहच्छिकाः स्युः संबन्धाभावादर्थैरिह स्फुटम् ॥ १ ॥
रवितापादिसंबन्धात्कल्पमन्वन्तरादयः ।
सार्थका एव नियतममी ग्राह्या यथायथम् ॥ २ ॥

सूत्रे—रवितापावसानावधि ब्रह्मदिनं महाकल्पः । २-२-२३
पृथिव्यां स्वायम्भुवस्वारोचिषवैवस्वताद्या मन्वन्तराख्याः कल्पाः
२-२-२४ ॥

---

सर्गमोपनिषदं त्वमूलिकां कल्पनामथ नरादिमूर्त्तिताम् ।
सन्दुरत्र किल कल्पयन्ति ये दुर्धियस्त उभयेत्र धिक्कृताः ॥ १९ ॥
(अ० ५) भास्वदूष्मावनयावधि स्फुटं ब्राह्ममेकदिनमुच्यते बुधैः ।
कीर्त्तितं तदभिधान्तरं महा-कल्प इत्यपि विपश्चितां वरैः ॥ २० ॥
कल्पजातमवनादवान्तरं मानवान्तरसमाख्ययोदितम् ।
अन्तरं निजगदुः स्वयं भुवो भास्वदण्डसमवस्थितिं भुवः ॥ २१ ॥
स्वप्रकाशपरितप्तगोलकेत्रान्तरं निगदितं स्वरोचिषः ।
ख्यातवत्यथ विवस्वदंशुभिर्भूपदेश्य तु विवस्वदन्तरम् ॥ २२ ॥

षष्ठाधिकरणमारचयति—

व्यक्तयोऽत्रावताराः स्युर्जातयो वा झषादयः ।
विशिष्टा व्यक्तयः स्पष्टमवतारा उदीरिताः ॥ १ ॥
सिंहः पशूनामित्यादि-व्यपदेशात्तु जातयः ।
अवतारा गुणैर्योगादेव व्यक्तिषु तद्वचः ॥ २ ॥

सूत्राणि—अवतारा जीवजातयः । २-२-२५ । योग्यतमावस्थानाद्विलोपो महाव्यालादीनाम् । २-२-२६ । जनकयोगाद्योग्यताधिक्यमुभयोर्धनत्वेवस्थानपकर्षे । २-२-२७ ।

---

(अ ६) प्रादुरास कृमिमीनकच्छपाद्याकृतिकर्मविकासशालिना ।
जीवशक्तिरवनौ नरावधिस्तेन तत्तदवतारता मताः ॥ २३ ॥
यास्तु रोमशगजादयोऽभवन्व्यानजातय इह क्रमागते ।
ता विनेशुरथ योग्यताधिकैः पीडिताः किल शरीरिभिर्हठात् ॥ २४ ॥
योग्यताधिकतरोचिता सुते योगतो जनकयोर्जनुष्मति ।
पैतृकः प्रकृतितोऽथवा न चेत्कोऽपि हेतुरपकर्षको महान् ॥ २५ ॥
शाश्वती किल जगद्विचित्रता नात्र कार्यगुणयोरहेतुकम् ।
हन्त हेतुभिदयेति दृष्टया संगता विषमता यता स्थिता ॥ २६ ॥
पूर्वजन्मपरजन्मकल्पना वेदशास्त्रमपि समन्वयायपि ।
या समर्थयितुमाश्रिता जनैः सा प्रमादजनिताल्पकथा परम् ॥ २७ ॥

अथ्रमार्थमकरणमारचयति—

भूः स्थिरा वा सगतिका सा स्थिरैवोपलभ्यते ।
लम्बरेखापगमनात्क्षिप्ताश्मस्थितिभेदतः ॥ १ ॥
अबाधितानुमानेन भूरियं गतिशालिनी ।
निर्णीता स्थितिभानं तु घर्षणादेरभावतः ॥ २ ॥

सूत्राणि—भूरक्षपरिवर्त्तिनी सूर्यं पर्येति ग्रहान्तरवत् । २-२-२८ । गतेरुपपत्तयः । २-२-२९ । घर्षणाभावादन्तादर्शनाच्च गतेरननुभवः । २-२-३० । वाष्पशकटस्थस्य तन्त्रीस्तम्भादीना-मिव नक्षत्रादीनां गतिभानम् २-२-३१ । नौदृष्टान्तो वा २-२-३२ ॥

---

(ब॰ ७) भूमिरक्षपरिवर्त्तिनी रविं ह्रायनेन परियाति सर्वदा ।
ईदृशी ग्रहगतिर्विनिश्चिता सूरिभिर्ग्रहविदां धुरि स्थितैः ॥ २८ ॥
लम्बलिप्यपगमादपक्रमाद्दूरतो निपततस्तथाश्मनः ।
संगतेश्च गणनासु सर्वथा गौरियं गतिमती विदां मता ॥ २९ ॥
घर्षणं न धरणेर्वियत्पथे नैव निस्तलतयान्तदर्शनम् ।
वेगवत्यपि ततोनुभूयते नैतदीयगतिरस्मदादिभिः ॥ ३० ॥
भाति वाष्पशकटेन गच्छतो नौकया सरिति वा प्रसर्पतः ।
यानमस्फुटगमं तटद्रुम-स्तम्भजातमपि तु प्रतिव्रजत् ॥ ३१ ॥
तद्वदेव नभसि प्रसर्पतां भूग्रहेण सह नो निजाश्रयः ।
भासते स्थिर इव प्रतिव्रजद्दृश्यते च रवितारकादिकम् ॥ ३२ ॥

षष्ठमाधिकरणमारचयति--

जलेन प्रलयः किंवा प्रालेयेनाथवा मतः ।
जलेन मध्यमैरुक्तस्तस्मात्स्वोक्रियतां तथा ॥ १ ॥
प्रालेयव्याकृतिः शालातुरीयाद्यैर्यथा कृता ।
भूविद्यावेदिनामिष्टः प्रालेयप्रलयस्ततः ॥ २ ॥

सूत्राणि—मद्धान्तौ मेरुद्वयं दक्षिणोत्तरम् । २-२-३३ । मेरौ प्रालेयनिपातः प्रलयस्तन्निर्वचनात् । २-२-३४ । कृतारम्भः सरित्सागरगिर्यादिलङ्घिनाम् । २-२-३५ ॥

नवमाधिकरणमारचयति—

युगव्यवस्था दैव्या वा मानव्या समयापि वा ।
दैव्या स्याद्वैष्णवीयादौ दिव्यशब्दस्य दर्शनात् ॥ १ ॥
मानभिन्नेष्वहोरात्रे दिव्यमानुपवर्षयोः ।
अयनद्वितयात्मत्वात्साम्यं वादोत्र नोचितः ॥ २ ॥

सूत्राणि—ध्रुवीयमहोरात्रसमं दैवं वर्षम् । २-२-३६ ।

---

(अ० ८) पक्षयष्टिरिह केन्द्रवेधिनी भूग्रहस्य परिकल्पिता तु या ।
मेरुयुग्ममिति दक्षिणोत्तरं कीर्त्तितं तदवधिद्वयं बुधैः ॥ ३३ ॥
मेरुमुत्तरमुपावसन्पुराहर्निशात्मकसमस्तवत्सरम् ।
सुस्थिताः सुचिरमार्यपूर्वजाः कर्षणादिकुशला महौजसः ॥ ३४ ॥
यात्यनेहसि हिमान्युपसुता मेरुभूरथ बभूव भीषणा ।
तां विहाय च जनाः प्रतस्थिरे दक्षिणां दिशमवारितोद्यमाः ॥ ३५ ॥
ये हिमप्रलयविप्लवेषु तेष्वन्तकर्वि निधनं महागजाः ।
रोमशा उपययुः सहस्रशस्तेऽद्य यावदपि यान्ति दृश्यताम् ॥ ३६ ॥

तदयनद्वयात्मकमनियतदिनसंख्यमत्र ग्रहान्तरेषु च । २-२-३७ । द्वादशसाहस्रे मानवानां चतुर्युगे न दिव्यशब्दः २-२-३८ । दिव्यमानुषयोः समत्वेपि क्वचिद्दिव्यशब्दः प्राक्स्थित्यपेक्षः । २-२-३९ । युगव्यवस्था देशभिन्ना भूतमात्रे न भविष्यति २-२-४० । त्रेताद्वितीयं कृततुरीयं वा तदाग्रहवताम् २-२-४१ ॥

दशमाधिकरणमारचयति—

सप्तद्वीपयुताः सप्त स्थिता मद्यादिवार्धयः ।
अन्यादृशा वा, सप्त स्युः प्राच्यैरुत्प्रेक्षिता यथा ॥ १ ॥
क्षारस्य संचयाच्छश्वद्बाष्पीभवति वारिणि ।
विसर्गलवणोम्भोधिर्महाद्वीपद्वयं त्विह ॥ २ ॥

---

सागरांश्च सरितो गिरींस्तथा यद्विलङ्घ्य शतशः समं ययुः ।
सप्तसिन्धुपरिभूषिता भुवो विश्रुतौजस इहार्यपूर्वजाः ॥ ३७ ॥
तेन तद्युगमभूत्कृतात्मनां संमतं क्षितितले कृताख्यया ।
सत्यमित्यपि मृषाकुकल्पनावर्जनाद्विदुरमुष्य चाभिधाम् ॥ ३८ ॥
( अ० ६ ) मेरुमण्डलनिवासिनामहोरात्रतुल्यमयनद्वयं विदुः ।
वत्सरोयनयुगेन संमितस्तत्र नैव नियतस्त्वहर्गणः ॥ ३९ ॥
मेरुवर्षमिदमेव दिव्यमित्युच्यते नरसमासमानता ।
पार्थिवायनयुगात्मनः स्फुटा त्वस्य हन्त ऋजुचेतसामपि ॥ ४० ॥
पूर्वजानुसरणोद्यतैः क्वचिद्दिव्यवर्षगणना समादृता ।
स्वीकृतापि न युगव्यवस्थितावन्तरं घटयितुं क्षमेत सा ॥ ४१ ॥

सूत्रे–अत्र संप्रत्येको नैसर्गिकलावण्यः समहाद्वीपद्वयः सोच्चावचानेकद्वीपोपद्वीपो महार्णव उपाधिभिन्नः २-२-४२ । सुरादिकल्पना वर्णादिहेतुकातिशयोक्तिः पोतादिसागरवत् २-२-४३॥

इतिद्वितीयाध्यायस्य द्वितीयाह्निकम् ।

---

दिव्यमानुषभिदामपास्य तन्मानवीयमवलम्ब्य वर्त्म च ।
स्वीकृता युगचतुष्टयस्थितिर्नाद्य संघटयितुं कलिं क्षमा ॥ ४२ ॥

भूतमात्रविषया युगस्थितिः किं स एव नियमो भविष्यति ।
देशभेद मिह साप्यपेक्षते नैकरूपसुखदुःखता भुवाम् ॥ ४३ ॥

सार्वकालिकयुगव्यवस्थितेरेकरूप्यविषयेप्यथाग्रहे ।
तुर्य एव चरणः कृतस्य वा त्रेत एव किमु वादिमात्परः ॥ ४४ ॥

द्वादशाद्यमयुतार्धमद्य यत्साम्प्रतं समुदयात्कलेर्गतम् ।
द्वादशादिमशतान्यतः कलेः सत्यमेव तु युगं ततः परम् ॥ ४५ ॥

ह्रास एकचरणक्रमाद्यथा वृद्धिरप्यथ तथैव संमता ।
द्वापरात्कलियुगद्वयोस्समात्त्रेतयैव पदमर्पितं ततः ॥ ४६ ॥

त्रेतयाद्य कृतसंनिधौ क्षितौ सर्वतः शुभकृतेः पदत्रयम् ।
दुष्कृतेश्चरण एकको हठाद्भारते निपतितः प्रमाथिनि ॥ ४७ ॥

(प्र० १०) एवमद्य चरणोनसत्कृतौ त्रेतया विहितसंनिधौ क्षितौ ।
एक एव लवणो निसर्गतः पाथसां पतिरुपाधिभेदवान् ॥ ४८ ॥

अंशकत्रितयमम्बु भूतले वर्तते स्थलमथैककोंऽशकः ।
द्वीपयुग्मकमिह स्थितं महत्क्षुद्रभूर्यवनिबिन्दुसंयुतम् ॥ ४९ ॥

सुरार्णवादेः परिकल्पना तु या परिस्फुटात्युक्तिरियं चिरंतनी ।
सितारुणश्यामलतादि वारिधावुपाधिजं जात्ववलंब्य कल्पिता ॥५०॥

इतिद्वितीयाध्यायस्य द्वितीयाह्निकम् ।

---

तृतीयाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति—

ज्ञानं कर्म च भक्तिश्च समुच्चेयान्यथो न वा ।
परस्परविरुद्धत्वान्न स्यात्तेषां समुच्चयः ॥ १ ॥
अन्योन्यसहकारित्वाच्छ्रेयांस्तेषां समुच्चयः ।
न पारमार्थिकस्तेषां विरोधं कश्चिदीक्षते ॥ २ ॥

सूत्राणि—कर्मेत्येके ३-१-१ । ज्ञानमेव भिक्षवः ३-१-२ ॥
भक्तिस्तृतीयं तद्द्वयं तु मनसस्त्र्यात्मकत्वात् ३-१-३ ॥

द्वितीयाधिकरणमारचयति—

पितृत्वाद्येव बीजं स्याद्भक्तेर्लिंगसाथवा परा ।
भक्तिर्बाह्यफलाधीना सर्वं लाभेच्छया यतः ॥ १ ॥

---

( अ० १ ) न केवलं कर्म पुमर्थ इष्यते जडेपि वाग्यानसि दृश्यते हि तत् ।
अकर्म च ज्ञानमसंभवं द्वयी न चेतसस्त्र्यात्मन इष्टतुष्टये ॥ १ ॥
इतीष्यते चेतसि बुद्धिवेदना-क्रियात्मके भक्तियुतैव सा द्वयी ।
त्रिवर्गसिद्धिस्त्वितयानुकूल्यतो ममत्वनाशादमतात्मिका ध्रुवम् ॥ २ ॥
विपश्चितश्चेतसि बुद्धिवेदना-क्रियात्मके नैकतमावलम्बिनः ।
त्रयं हि तैलाग्निदशोपमं यतः सहायतामेति परस्परस्य तत् ॥ ३ ॥
विपद्यते वेदनया नयातिगः क्रियान्धता श्वापदचेष्टितं परम् ।
अतद्द्वयं ज्ञानमविद्यया समं त्रयी पुमर्थाभिमतः समृद्धये ॥ ४ ॥
ममत्वमास्कन्द्य सतो तु विद्यया चरंश्च भक्त्या किल कर्म निर्मलम् ।
उपैति सिद्धिं जनकादिवत्परां विपर्यये दुर्गतिरेव केवलम् ॥ ५ ॥
( अ० २ ) नृपे जनन्यां जनके गुरौ तथा परेपि च श्रेयसि कोपि योद्भुतः ।
हृद्येकगम्योतिशयः स केवलं नरेषु भक्तेरिह बीजमुच्यते ॥ ६ ॥

भक्तेर्बीजं पितृत्वादि बाह्यहेत्वनपेक्षणात् ।
यद्बाह्यफलसापेक्षं तद्वाणिज्यं स्फुटं मतम् ॥ २ ॥

सूत्राणि—भक्तिर्वात्सल्यमद्भुतोत्कर्षापेक्षमहेतुकाराधनपर्यवसायि २-१-४ । उपकारः परीक्षितः प्रतीक्षितोवा सर्वात्मनः शरीरविशेषस्य वा स उत्कर्षः ३-१-५ । सत्त्वविकाशान्नैसर्गिकं तत्प्रतिभानम् ३-१-६ । ज्ञानाङ्कुरमात्रसहभाविनी सर्वजनी ३-१-७। सर्वमाभासमात्रं तामन्तरेण ३-१-८ । न सा बाह्यसौन्दर्यसुखाद्यपेक्षिणी ३-१-९ ॥

---

प्रतारयत्सु प्रचुरान्मृषोक्तिभिर्न सिद्धधूर्त्तेषु तु भक्तिमान्भवेत् ।
अमीषु भक्त्या स्वजनं हि सादयन्पतत्यवश्यं निरये विपन्मये ॥ ७ ॥
इयं क्षितिः क्रन्दति मांसचक्षुकैः प्रबाधिता सिद्धविशेषनामभिः ।
न शिल्पशास्त्रप्रणया विपश्चितः समाद्रियन्ते किल तैस्तिरस्कृताः ॥८॥
भुकुंसभक्ता विनयस्य शत्रवः सदैव पश्चात्कृतशास्त्रशिल्पकाः ।
विदूषयन्तस्तनयान्कुटुम्बिनां चरन्ति सिद्धा विगतत्रपा भुवि ॥ ६ ॥
समेत्य वा पण्यविलासिनीजनैरथापि धूर्त्ताः किल सिद्धनामभिः ।
अयं पुरा खेदयतीति जाग्रतीं निरस्य शङ्कां तनयं प्रपुष्णतेः ॥ १० ॥
अहेतुकं सेवनमाचरत्परं अमेयः पित्रोः समुपैति निष्कृतिम् ।
सहेतुका नैव हि भक्तिरिष्यते ध्रुवं वणिज्यापदवीं तु सार्हति ॥११॥
जनो न पित्रादिषु भक्तिसिद्धये कदापि सिद्धस्य वचांस्यपेक्षते ।
वधूर्यहीतुं पतिदेवताव्रतं श्विटं न पौराणिकमेति रात्रिषु ॥ १२ ॥
निरस्य तन्द्रामृषिभिः कृतानि येऽधिगम्य शास्त्राणि महौजसः सुताः ।
स्वदीयदोषानपसार्य सूक्ष्मया परीक्षया योजितया पदे पदे ॥ १३ ॥

तृतीयाधिकरणमारचयति-

भक्त्योपकारो ज्ञानस्य धर्मस्य च भवेन्न वा ।
भक्तस्य समयाभावाद्भक्त्या स्यान्नाश एतयोः ॥ १ ॥
सत्त्वोद्रेकात्परा भक्तिः सत्त्वं च ज्ञानधर्मयोः ।
सहकारकमित्यस्माद्भक्तिस्तदुपकारिणी ॥ २ ॥

सूत्रम्–ज्ञानधर्मसहकारिणी सत्त्वोद्रेकात् ३-१-१० ।

---

समाहृतार्थैर्विनयेन सर्वतः प्रबन्धजातैः परिपूरयन्ति ते ।
विरोधवन्त्यार्पमयं न दुर्धियः पुरातनानां स्तुतिगानतत्पराः ॥ १४ ॥
इतीदृशीयं ननु पारमार्थिकैः सदैव भक्तिः पितृषु प्रशस्यते ।
निरस्य तां सिद्धिविभूतिलोलुपो मरीचिपानैरिह खेदयेद्गुरून् ॥१५॥
न भक्तिवीजं किल वाह्यसौष्ठवं मतं पितृत्वादि हि तत्कृतात्मनाम्
परीक्षया दोषविनिश्चयेऽप्यतश्चिरन्तनानामपहीयते न सा ॥ १६ ॥
अरूपमज्ञं जडमन्धमुद्धतं पतिं निजं वा जनकं निषेवते ।
कलत्रतोकादि यथा तथा वयं स्वपूर्वजत्वेन चिरन्तनानुमः ॥ १७ ॥
त्वयांस्तु भक्तोऽपि यथावधानवान्गुरोः पितुर्वा विदयं विदारयेत् ।
चिरन्तनानामपि निष्ठुरस्तथा परोक्षको दोषमुदस्यति ध्रुवम् ॥ १८ ॥
अमेरिकीयैर्न महात्मभिः स्वयं विपश्चिरैः ख्यापितसिद्धिवैभवान् ।
चिरन्तनान्सिद्धतया निषेवितुं यतामहे शुष्कगुणस्तवोत्सवैः ॥ १९ ॥
यथा तु सभ्याः पितरः कृतोद्यमाः स्वकालिकानां विदुषां धुरि स्थिताः।
तथाद्य विज्ञानविदां धुरोणतां स्वबन्धुताया घटयेम यत्नतः ॥ २० ॥
धृतिं भजेद्रावणपुष्पकस्तवैर्मनागनार्यः किल रावणानुजः ।
इहार्यवंश्याः पुनरात्मनः श्रमैर्नवं नवं निर्मिमतेऽद्य पुष्पकम् ॥ २१ ॥

चतुर्थाधिकरणमारचयति-

भक्तो वाह्यं भजन्दुःखं भक्तिं मुञ्चति वा नवा ।
अयोपि मार्दवं तापे याति भक्तोप्यभक्तताम् ॥ १ ॥

---

न धूर्त्तगोमायुमुखानलोज्ज्वले सुदारुणे सिद्धिविभूतिगह्वरे ।
निपत्य विज्ञानपराङ्मुखा मुखं कलङ्कयेम स्वकुलस्य दुर्ग्रहैः ॥ २२ ॥

अविज्ञतावस्करगर्त्तमाश्रितान्विलोक्य नस्तत्र चिरस्थितिं हृदा ।
दिदृक्षमाणाः कितवाः स्तुवन्त्यमी परेषु च स्वेषु च दिव्यशक्तिताम् ॥२३॥

(अ० ३) न तन्त्रमन्त्राद्यभिचारकैतवैर्विभूतिमापुर्महनीयविक्रमाः ।
उपास्य विज्ञानममी तु वास्तवं पुरापि सिद्धारभजन्महाद्भुताः ॥२४ ॥

न योगिगम्यैर्यवसैर्हिमाद्रिजैर्न चापि निःश्वासनिरोधविभ्रमैः ।
जनश्चिरं प्राणिति हन्त तण्डुलानपेक्षते जाठरवह्निशान्तये ॥ २५ ॥

विलुप्लवं भक्तिमहेतुकां भजन्प्रमादशून्यो विधिजातमाचरत् ।
परीक्षमाणश्च पदे पदे खिलानिहार्थवादानुदयं जनो भजेत् ॥ २६ ॥

कथासु वैधेयजनप्रियासु हा पिशाचसंबन्धमनोरमासु वा ।
विपच्चरोपानदुपाश्रितासु वा सुधीः कथास्थामिह कर्तुमर्हति ॥ २७ ॥

समाधिमूर्च्छाकुशले खले नवा न चापि जातिस्मरदाम्भिके विटे ।
न वा विपच्चारविडम्बनाप्रिये जनस्य भक्तिः कुशलं विधास्यति ॥ २८ ॥

यथा नृणां हन्त निकृत्तनासिको विनासिकत्वाय मुहुर्विचेष्टते ।
तथा परेषां कितवैः प्रतारितः प्रतारणाये यतते पुनः पुनः ॥ २९ ॥

पयो निसर्गाद्वजवः स्तनन्धयाः पिबन्ति मातुः प्रणयार्द्रचेतसः ।
भजन्ति नैवोत्सुकतां सुधाघटे सुरालयस्थे कविभिः प्रकल्पिते ॥ ३० ॥

तथैव विज्ञानमयं पिबन्सुधीः सरस्वतीस्तन्यमनन्यमानसः ।
विभूतिविस्फारविपन्मणालिनी-मधुद्रवैर्नैव धिनोति भावनाम् ॥ ३१ ॥ ॥

भक्त्या सह महद्दुःखं सुखं भक्तस्य संमतम् ।
तां विनां न सुखं किञ्चिन्नातो भक्तिं स मुञ्चति ॥ २ ॥

सूत्रम्–निरवधि दुःखं तया सह सुखं सुखावधिस्तां विना दुःखम् ३-१-११ ॥

पञ्चमाधिकरणमारचयति–

पित्रादिविरहार्त्तस्य स्याद्भक्तेः संक्रमो नवा ।
पित्रादीनां विनाशे स्यात्सिद्धादौ भक्तिसंक्रमः ॥ १ ॥
विरहाख्यां महाभक्तिं वहन्हन्त कथं सुधीः ।
धूर्ते संक्रमयेद्भक्तिं तस्मात्स्यान्नैव संक्रमः ॥ २ ॥

सूत्रम्–भक्तिविरहो महाभक्तिः ३-१-१२ ॥

---

शिशुर्मुमूर्षुः फणिफेनबिन्दुना क्रमेण मात्रापरिवर्धनाद्यथा ।
विषस्य पिण्डान्ग्रसतेन्तरेण तान्मुहूर्त्तमप्युत्सहते न जीवितुम् ॥ ३२ ॥
तथा मृषावादपराङ्मुखाः क्रमात्प्रतार्यमाणाः किल धर्मकञ्चुकैः ।
विभूतिसिद्ध्यादिमृषाकुकल्पना-विषप्रपातं बहु मन्तुमीशते ॥ ३३ ॥
(अ. ४) सुखं महद्दुःखसमं ध्रुवं मतं विनेह भक्तिं खलु पारमार्थिकीम् ।
सहानया दुःखमपारमुत्तमाः सुखप्रकर्षेण समं पुनर्विदुः ॥ ३४ ॥
(अ. ५) नृणां जनन्यादिषु भक्तिरुत्तमा प्रकीर्त्तिता सा यदि नैव संभवेत् ।
असंनिधानाद्विषयस्य वान्यया तदावसादेद्विरहाम्बुधौ सुखम् ॥ ३५ ॥
न सिद्धधूर्त्तेषु तु भक्तिमात्मनो मनस्विनः संक्रमयन्ति कर्हिचित् ।
निवेशयन्ति प्रणयं महारथास्तुरङ्गयोग्यं न खले खराधमे ॥ ३६ ॥

षष्ठाधिकरणमारचयति–

विषया नृपपित्राद्या भक्तेः सिद्धादयोऽपि वा ।
सिद्धादयोऽपि किं न स्युर्महात्मानो हि ते मताः ॥ १ ॥
विषया नृपपित्राद्याः किं सिद्धैर्वञ्चकैरिह ।
अतो न सिद्धेषु जनो भक्तिं कुर्वीत धर्मवित् ॥ २ ॥

सूत्रे–विषयाधिकारिभेदादनेकधा ३-१-१३ । मातापितृगुरु-नृपदेवाद्यास्तद्विषयाः ३-१-१४ ॥

---

(प्र. ६) जनस्य पित्रोरथवा प्रजेश्वरे तथा निजेध्यापयितर्यपि स्फुटम् ।
निसर्गजा भक्तिरनन्यगामिनो न सिद्धधूर्तेषु विभूतिवादिषु ॥ ३७ ॥
न मूर्खधूर्तादिमहोदर्शितयोस्तमोमयं यस्य शिशोर्मनो भवेत् ।
कथं स नैसर्गिकभक्तिमस्मरन्विभूतिवादेषु मुधा निमङ्क्ष्यति ॥ ३८ ॥
विटान्महादम्भपरान्वकव्रताञ्शठान्प्रसक्तान्विकृतेषु कर्मसु ।
प्रतारकानुद्धतधर्मकञ्चुकान्समृद्धिकामो वचसापि नार्चयेत् ॥ ३९ ॥
स्मरन्भृगोरुक्तिमितीदृशीं हृदा न सिद्धधूर्तांश्च तदर्चकांस्तथा ।
नरोऽनुगच्छेच्चरकं न कामयेदिहैव सद्यो यदि मोक्षविह्वलः ॥ ४० ॥
वराह्वितेच्छूनरहस्यया जनान्सुविद्यया वर्धयतो महामतीन् ।
निषेवते शास्त्रपराह्नि भावुको न सिद्धधूर्तान्क्षितिभारसंनिभान् ॥ ४१ ॥
यथा स्फुलिङ्गस्य परीक्षया शुचेरसेचकत्वं निखिलस्य जानते ।
परीक्ष्य शब्दादि निजं तथेगते ततोऽवगन्तुं लघिमाद्यसंभवम् ॥ ४२ ॥
न सेचकत्वं दहनस्य जातुचिच्च चासुरोधाद्धियति प्रसर्पणम् ।
नरस्य नैवामरता न च ध्वनेः सुवर्णवस्त्रोरगजन्मदावृता ॥ ४३ ॥
चिरन्तशब्दादिह दिव्यदृष्टिता प्रमाणता तस्य च दिव्यदृष्टितः ।
इतीदृशे हन्त परस्पराश्रये चिरन्तवादानुसरीकरोतु कः ॥ ४४ ॥

सप्तमाधिकरणमारचयति—

अधिकारः सुतादीनां हैतुकानामथापि वा ।
हैतुकानां भवेद्भक्तावधिकारः परैः सह ॥ १ ॥
भक्तियंशो मतस्तत्र वणिजां नाधिकारिता ।
हैतुका वणिजो नूनं खपुष्पपणनोद्यताः ॥ २ ॥

सूत्राणि—सत्त्वोद्रेकवन्तः पुत्राद्या अधिकारिणः ३-१-१५ । हैतुकास्तदाराधकाश्चानधिकृता महाप्रमादादिदोषग्रस्तत्वात् ३-१-१६ । प्रमादादिर्ज्ञानाङ्कुरानलो भक्त्यादिविरोधी ३-१-१७ । अहेतुकेऽप्याराधने दृष्ट्यदोषाद्विषयाधिकारिणोर्निःश्रेयसम् ३-१-१८ सहेतुकाराधने दृष्टिदोषादुभयोर्विनिपातः ३-१-१९ । शम्भलीगृहीतया प्रमदयेव प्रमादवत्या ३-१-२० ॥

---

यथोपधाख्यामपि कर्णगोचरे रुजार्दितो न क्षमते हृतेहितः ।
विभूतिलुब्धो व्यथते तथा मुहुः श्रुतिं प्रयाते परमार्थनामनि ॥ ४५ ॥
(अ. ७) जनस्य सत्त्वातिशयेऽधिकारिता मतात्र भक्तौ न तु तद्विपर्यये ।
अदुष्टदृष्टेर्हि सुखाय चन्द्रिका विदूषिताक्षस्य तु निष्फलेव सा ॥ ४६ ॥
चिरन्तनेष्वद्यतनेषु वा जनो विभूतिसिद्ध्यापवकल्प्य भक्तिभान् ।
अभक्तिमानेव वणिक्स हैतुकः पणायितुं वाञ्छविपाणमिच्छति ॥ ४७ ॥
अहैतुकी भक्तिरनुष्ठिता ध्रुवं समस्तकल्याणमयी सतां मता ।
अदृष्टिदोषो हि गुरोस्तथात्मनः सदैव भक्तः कुशलं विधास्यति ॥ ४८ ॥
सदृष्टिदोषः शशशृङ्गकङ्कृतेः पणायमानो विषयस्य चात्मनः ।
निपातमुग्रं स ऽसैव साधयेत्प्रमादमग्नः प्रमदाजनो यथा ॥ ४९ ॥

अष्टमाधिकरणमारचयति-

शून्यमूर्त्यादिपूजा वा सत्यस्यान्वेषणं नु वा ।
भक्तिः स्याद्वास्तवी शून्यपूजादिः सा विरागिणाम् ॥ १ ॥
शून्यपूजादि मूर्खत्वं सत्यस्यान्वेषणं तु यत् ।
विज्ञानस्यानुसारेण भक्तिः सा परमा मता ॥ २ ॥

सूत्रे-परमार्थभक्तिर्महिष्ठा प्रमादविरोधिनी ३-१-२१ । भक्त्यन्तरमाभासस्तां विना ३-१-२२ ॥

नवमाधिकरणमारचयति-

स्वस्वाकारभृतो देवा निराकारास्तु वा मताः ।
सर्वे प्राणिशरीरास्ते न स्वाकारा अचेतनाः ॥ १ ॥

---

अतो जनः सिद्धिविभूतिशम्भलीप्रलोभ्यमानामपि भक्तिमात्मनः ।
निवेशयेत्सिद्धविटे न जातुचित्कुलेऽन्यथा स्याद्विपुलो ह्युपप्लवः ॥ ५० ॥
(अ० ८) स्थिरां दधानेन पितृप्रवहेतुकां जनेन भक्तिं तदृणस्य शुद्धये ।
परीक्षमाणेन चिरन्तनीर्गिरो विधीयतां विज्ञतरत्वमात्मनः ॥ ५१ ॥
महौषधं हेतुकृतामहारुजः प्रमादकुष्ठस्य रसायनं शिवम् ।
सुदोहदः सत्यपादपश्रियां परात्र भक्तिः परमार्थगामिनी ॥ ५२ ॥
क्रियाः समस्ता निखिलाश्च भक्तयस्तथाखिलं ज्ञानमनर्थकारणम् ।
विनात्र भक्तिं परमार्थगामिनीं तयाहि सर्वं प्रथते महार्थकम् ॥ ५३ ॥
(अ० ९) मनोभिषङ्गा मदमत्सरादयस्तडित्प्रधानाः प्रकृतेश्च शक्तयः ।
कपालभस्मोरगसंग्रहादयो नृणां तथादर्शविशेषकल्पनाः ॥ ५४ ॥
सरित्समुद्राम्बुदपादपादयः पतङ्गसारङ्गसरोसृपादयः ।
ज्वरातिसारादिरुजश्च कल्पिताः सुरासुरत्वेन पुराणपण्डितैः ॥ ५५ ॥

सर्वे भवेयुः स्वाकाराः सूर्यादेः प्राणिता नवा ।
नाकारहीनता वापि सामञ्जस्यवती यतः ॥ २ ॥

सूत्राणि—मात्रादयः प्रसिद्धाः ३-१-२३ । देवासुरा वृत्तिशक्त्यादर्शकल्पनाद्याः । ३-१-२४ । नराद्याकृतिरुत्प्रेक्षा तथानाकृतिः ३-१-२५ । न नियता नाव्याहता न च माहात्म्यप्रयोजिका ३-१-२६ ॥

---

जनेन सर्वात्मनि वा परेषु वा सुरेषु किं वाप्यसुरेषु कल्पिता ।
अनाकृतिः प्राणिसमाकृतिस्तथा कवित्वसारेति मतं विपश्चिताम् ॥ ५६ ॥
न भास्करेऽधिप्रयुतावनीसमे न चापि शक्रे विलसत्तडिन्मये ।
न वा गिरीशात्मनि चन्द्रशेखरे नराकृतिर्नाकृतिशून्यतापि वा ॥ ५७ ॥
न कल्पितैर्बिन्दुभिरत्र निर्मितं घनात्मकं वस्तु विदन्ति तद्विदः ।
घनात्पृथक्कृत्य तु शब्दमात्रतस्तलादिबिन्द्वन्तमलं प्रकल्पयेः ॥ ५ ॥
न शब्दमात्रेण तु वस्तुनिश्चयः स्वतन्त्रया वस्तु परीक्षया हि सः ।
जनेन बन्ध्यातनयाख्ययोदितो भवाच्च वन्ध्यातनयो भविष्यति ॥ ५९ ॥
न वस्त्वनाकारमिहास्ति वस्तुतः समस्तमप्याकृतिमत्समीक्ष्यते ।
न दैर्घ्यविस्तारगभीरतोज्झिते गुणस्तु कश्चित्क्वचनोपलभ्यते ॥ ६० ॥
वियन्मुखं द्रव्यमवेयतां सुखं गुणः क्षुदाद्यैः प्रतिपद्यतां तथा ।
न दैर्घ्यविस्तारगभीरतामयं घनत्वमेतान्यपि जातु मुञ्चति ॥ ६१ ॥
घनत्वमेवाकृतिरत्र संमतानपेक्ष्यमस्याः स्फुटमन्तदर्शनम् ।
सहैव सर्वं स्थितमेतया यतः किमङ्ग तद्वस्तु भवेदनाकृति ॥ ६२ ॥
घनस्य दैर्घ्यादिमयस्य केवलं यथांशमंशानपि वा पृथक् पृथक् ।
विभज्य शब्देन जनः प्रकल्पयेत्तलानि रेखामथ बिन्दुमेव वा ॥ ६३ ॥

दशमाधिकरणमारचयति—

शिल्पशास्त्रप्रचारेपि प्रासादार्थी महान्व्ययः ।
कार्यो न वा, कार्य एव देवमन्दिरभक्तितः ॥ १ ॥
देवमन्दिरनाम्नापि ख्यातं विद्याविवर्जनात् ।
श्मशानमेव तद्दूरान्मानवः परिवर्जयेत् ॥ २ ॥

सूत्राणि—महिष्ठा सरस्वती ३-१-२७। तदाराधनं परमार्थ-भक्तिसमम् ३-१-२८ । सर्वेजनन्यपि पैशाचैः कुपुत्रैरुपेक्षिता

---

तथैव सत्तामपि तार्किकाङ्कुरो निराकृतिं कल्पयतीह वाचिकीम् ।
प्रसह्य भिक्षुः परिगृह्यतामथ प्रपञ्चहेतुत्वपदेभिविञ्चति ॥ ६४ ॥
परस्परव्याहतकल्पनाकुला श्रनाकृतिस्त्रीपुरुषाकृतिश्रिताः ।
कुतर्कणादेव विशेषगोचरा महत्त्वमेषां न हि ताः प्रयुञ्जते ॥ ६५ ॥
( अ० १० ) सुरेषु सर्वेषु सरस्वती किल श्रुता महिष्ठा सकलोपजीविता
फलं तदाराधनमाखिलं नृणां तदीयभक्तिः परमार्थसेवनम् ॥ ६६ ॥
पिशाचपूजामणिमादिदायिनीं प्रपद्यमानैः कुसुतैरुपेक्षिता ।
फलानपेक्षैरुदयन्महाफलैः श्रिता सुपुत्रैर्जयतीह भारती ॥ ६७ ॥
वसूनि वाञ्छन्नपि सिद्धिलोलुपः पतत्यवश्यं निरये विपन्मये ।
वसून्यवाञ्छन्नपि शास्त्रसेवया प्रयाति संपत्तिमिहाद्भुतां कृती ॥ ६८ ॥
सरस्वती यत्र न यन्त्रपुस्तकप्रधानविस्तारितसाधनैर्जनैः ।
निषेव्यते चैत्यमनार्यसेवितं तदुच्यते नैव तु देवमन्दिरम् ॥ ६९ ॥
न यत्र शास्त्राणि न शिल्पसंततिर्न यत्र च छात्रकुलं सुलक्षणम् ।
विपश्चितो यत्र न विश्रुतोद्यमाः श्मशानतुल्यं तदवेहि मन्दिरम् ॥ ७० ॥

निरयनिपातरसिकैः ३-१-२९। सात्त्विकैराराध्यमाना फलानपेक्षैः क्लेशमगणयद्भिर्महाफलशालिभिः ३-१-३०। तदालयाः प्रासादाः ३-१-३१। तदभावे चैत्यान्यत्यन्तमनपेक्ष्याणि ३-१-३२॥

इति तृतीयाध्यायस्य प्रथमाह्निकम्॥

---

न हूयते यत्र धनं महाधनैरनर्घ्यसज्जीकृतपुस्तकेष्टके।
समुल्लसद्ग्रन्थमयस्रुवस्रुचि प्रवृत्तशिल्पस्वनसामगीतिके॥ ७१॥

प्रमादमेध्याश्ववरे महाध्वरे समर्चिताध्येतृसुपर्वनिर्भरे।
सुविद्वदार्त्विज्यसनाथवेदिके श्मशानतुल्यं सुरसद्म तद्विदुः॥ ७२॥

विनयनिलयैः शिल्पेनल्पश्रमैरसमोद्यमै-
रनृतविरतैर्दम्भद्विड्भिः प्रमादमदोज्झितैः।
ध्रुवमपि पदे विश्वं ज्ञाने करे ग्रहतारकाः
कलयितुमलं बद्धोत्साहैरनाग्रहबन्धुभिः॥ ७३॥

प्रवचनपरैरन्तेवासिप्रियैरमितश्रुतै-
र्व्यसनविमुखैः सद्विद्वद्भिर्यदेव सनाथितम्।
मखितमवनौ विस्तीर्णायामदः सुरमन्दिरं
सफलमखिलं तत्साहाय्यं नृणां खलु शर्मदे॥ ७४॥

इति तृतीयाध्यायस्य प्रथमाह्निकम्।

---

तृतीयाध्याये द्वितीयाह्निके प्रथमाधिकरणमारचयति-

वस्तुस्वभावापेक्षाणि भिन्नान्याराधनानि वा।
प्रतीकादिप्रपञ्चैर्वा वस्तुवृत्तानपेक्षिभिः ॥ १ ॥
प्रतीकादिप्रपञ्चैः स्युस्तथा प्रायोऽत्र दर्शनात्।
वस्तुस्वभावापेक्षित्वा द्भिन्नान्याराधनानि तु ॥ २ ॥

सूत्राणि–आराधनानि ३-२-१। यज्ञो देवानां वाणिज्यभिः ३-२-२। व्याहृताननुसरणं परमार्थस्य ३-२-३। विज्ञानप्रचारो महायज्ञः सरस्वत्याः ३-२-४। साक्षादुपासनं पित्रादीनां संनिकृष्टानाम् ३-२-५। असंनिकृष्टानां ध्यानादि ३-२-६। तत्रोपयोगः प्रतीकपुस्तकादीनाम् ३-२-७। सच्चरितानुकरणं महापुरुषाणां

---

(अ. १) इति वीक्ष्य सुरान्सरस्वती-प्रभृतीनर्चयतां विपश्चिताम्।
असुरेष्ववहेलनावतामयमाराधनविस्तरोमुदे ॥ १ ॥
जगदभ्युदयाय सर्वतः श्रमयोगेण समाहृतैस्तथा।
जनतासु मुहुः प्रचारितैर्विविधैः शिल्पकलादिभिः शिवैः ॥ २ ॥
रुचिराध्ययनादिमन्दिरे परितश्छात्रनिवासमण्डिते।
महनीयतमां सरस्वतीं महतार्घेन जनः समर्चयेत् ॥ ३ ॥
जननीं जनकं गुरूंस्तथा पदसंवाहनभोजनादिभिः।
भजति स्वयमेव यत्नवानभिगम्यावहितो जितश्रमः ॥ ४ ॥
अभिगम्य पुनः स्वयं यदा न समाराधयितुं क्षमेत तान्।
स्मरणादिभिरेव साश्रुभिः शमयत्युत्सुकतां हृदस्तदा ॥ ५ ॥
स्मरणाद्युपयोगि पुस्तकं प्रतिमां लक्ष्म तथा परं भजन्।
विरहेष्वनुपेक्षितक्रियोऽखिलविधस्थं गुरुमर्चयेज्जनः ॥ ६ ॥

तथा च तैत्तिरीयाः ३-२-८। आज्ञापालनं शान्त्यभङ्गश्च नृपाणा-
म् ३-२-६। स्वाध्यायाद्याचार्यस्य ३-२-१०। होमादिः सूर्यादी-
नाम् ३-२-११। सर्वे इमे देवाः सर्वश्चायं यज्ञो व्यक्त्यर्थेवधा-
त् ३-२-१२। एवमन्येषाम् ३-२-१३ ॥

द्वितीयाधिकरणमारचयति-

विषयो नवधाभक्तेर्नियतो वान्यथापि वा ।
सर्वत्र नवधाभक्तिर्नियमस्तत्र नेष्यताम् ॥ १ ॥
वस्तुवृत्तानुसार्येव दृष्टमाराधनं यतः ।
आराधनत्वान्नियमः श्रवणादावपीष्यते ॥ २ ॥

सूत्राणि-श्रवणं कीर्तनं वन्दनं चोभयथा ३-२-१४। स्मरण मसंनिकर्षे ३-२-१५। चरणसेवनं दास्यं च संनिकर्षे ३-२-१६

---

अपचारमसद्वचस्तथा विनिरस्यावहितेन चेतसा ।
चरितानि वचांसि चाश्रयेदनवद्यान्यनिशं महात्मनाम् ॥ ७ ॥
इह शिल्पकलादिविद्यया सततं सेवितया महोद्यमः ।
कितवेष्वपभक्तिरर्चयेद्गुरुराचार्यमहार्यनिश्चयः ॥ ८ ॥
विनयेन सदैव वर्तयन्नलमाज्ञासु कदाचिदस्खलन् ।
अपरिक्षतशान्तिरात्मवाचियतं तोषयति प्रशासकान् ॥ ९ ॥
यवशालिगुडाज्यपायसैर्घनसारागुरुधूपचन्दनैः ।
अधिवाह्नि हुतैर्जनोऽर्चयेद्रविपर्जन्यमरुन्मुखान्सुरान् ॥ १० ॥
उदिता इति देवता इमा इह यज्ञस्तदुपासना मता ।
जगदभ्युदयार्थमात्मनः क्षतिरर्थस्य हि यज्ञ उच्यते ॥ ११ ॥

अर्पणमनेकधा प्रतीकनीये प्रतीके च ३–२–१७। सख्यं समान-
योरुभयथा ३–२–१८। आत्मनिवेदनं जायापत्योः ३–२–१९॥

तृतीयाधिकरणमारचयति–

इष्टो नवाधिकारादेर्विप्लवाद्भक्तिसंश्रयः।
इष्टो यस्माद्विरागार्त्तैः स्त्रीलक्ष्मादीह धार्यते॥ १॥
स्त्रियः स्त्रीत्वेन पुंसश्च पुंस्त्वेनैवेष्यते यतः।
वास्तवो भक्तिरिष्टोतो नाधिकारादिविप्लवः॥ २॥

सूत्राणि—फलाय लक्ष्मादिसेवनं दम्भादज्ञानाद्वा ३–२–२०।
नामफलादि तामसानाम् ३–२–२१। विपर्यासः प्रमादवतां स
भक्त्याभासस्तदसुराराधनं व्याहतानुसरणात् ३–२–२२॥

---

(श्र॰ २) श्रुतिकीर्त्तनवन्दनान्यसंनिहिते संनिहितेपि वस्तुनि।
स्मरणं पुनरत्र युज्यते समुपास्ये सविधानुपस्थिते॥ १२॥
सविधस्थित एव संमता चरणोपास्तिरथापि दासता।
बहुधोचितमर्चनं भिदामनुगच्छत्प्रियस्य सर्वदा॥ १३॥
समयोरिह सख्यमात्मनोर्पणमिष्टं किल भर्तृभार्ययोः।
अनपेक्ष्य फलं कृतात्मभिः कृतिभिर्भक्तिरितीयमादृता॥ १५॥
(श्र॰ ३) अथ हेतुमपेक्ष्य यज्जनः प्रतिमाख्याङ्कमदादि सेवते।
नहि भक्तिरियं विमूढता महती दम्भविजृम्भणाथवा॥ १५॥
इह भक्तिमुशन्ति तामसा अधिकारादिविपर्ययेण ये।
असुरान्मदमत्सरादिकान्मतिहीनाः परितर्पयन्ति ते॥ १६॥
पितरौ द्विषतः खचारितामुशतः सिद्धविटप्रपत्तिभिः।
अवधीरयतः सरस्वतीमभिचारादिपिशाचसेविनः॥ १७॥

चतुर्थाधिकरणमारचयति =

सर्वात्मनः प्रतीकाद्यैर्भक्तिर्धर्मेण वा भवेत् ।

विरज्य सर्वतः कार्यात्प्रतीकाद्यैस्तु सा भवेत् ॥ १ ॥

सर सेवादिधर्मेण सेवा भगवतो मता ।

न शून्यस्तवमूर्त्यादि-पूजनैः सा भविष्यति ॥ २ ॥

सूत्राणि—धर्मो भूम्नः सर्वात्मनो देवदेवस्य ३-२-२३। धर्मः सत्यं धारणात् ३-२-२४। धर्म आत्मनः प्रतिकूलस्यान्यस्मिन्नन-

---

परिहृत्य विपश्चितां सदो जुषमाणान्सक्तून्भुक्तुंसकान् ।

शिशुरप्यवधानवान्कथं सुरभक्तानभिधातुमर्हति ॥ १८ ॥

(अ० ४) अपरेष्विति कीर्त्तितः सुरेष्वयमाराधनविस्तरः शिवः ।

सकलात्मनि देवतोत्तमे ननु धर्मार्चनमेकमिष्यते ॥ १९ ॥

यदिहात्मनि वा परत्र वा परमं सत्यमसत्यवर्जितम् ।

मनसा वचसाथ कर्मणानुगमस्तस्य तु धर्म उच्यते ॥ २० ॥

अमुनेव धृतं जगत्सदा परिशीर्येदमुमन्तरेण यत् ।

तदमुं प्रवदन्ति शाश्वतं किल धर्मं प्रथिता विपश्चितः ॥ २१ ॥

यदथात्मनि वा परेषु वा खचरत्वादिविभूतिकल्पनम् ।

तदनुव्रतमेव कर्म च स्फुटमाख्यातमधर्म इत्यदः ॥ २२ ॥

क्रतुपानपरः कुमारिकाकुलसंदूषणपातकी पशुः ।

स्वयमार्त्तवलक्ष्म धारयचतिबीभत्सविकर्मकर्मठः ॥ २३ ॥

वियदुड्डयनादिवाञ्छया सुरगन्धर्वदिदृक्षयापि वा ।

अपि राघववासुदेवयोर्वसुधायामवतारणाय वा २४ ॥

नुष्ठानं सर्वभूतात्मभावात् ३-२-२५। स उद्योगाश्रयस्तमोविरोधो ३-२-२६। अधर्मस्तद्विरुद्धः ३-२-२७। भूम्न आराधनं प्रशास्तुरिव तत्र ज्ञानभक्तिकर्मणामैक्यम् ३-२-२८। तस्मिन्पक्षपातासंभवः स्वभावादेव ३-२-२९॥

---

पतितः स्वयमात्महा विपश्चिरये वाप्यथ धर्मकञ्चुकः।
विनिपातयितुं परान्मुहुः कृतयत्नो वक्रवृत्तिमाचरन्॥ २५॥
अपि पूतिनि पातके गतङ्गणिकाज्ञामिनवार्त्तयोच्छ्वसन्।
कथमोद्रृगिहाभ्युपेयतामजुकेनापि जनेन धार्मिकः॥ २६॥
न निजप्रतिकूलमाचरेन्मनुजेन्यत्र जनः कदा चन।
इति शाश्वतधर्ममूचिरेपि चिरन्ताः किल सत्यमूलकम्॥ २७॥
अनुकूलमिहाभ्युपैति यः परवित्तस्य विलोपनं कर्ता।
निजवित्तविलोपकारिणं प्रहरन्दस्युमसावसत्यधीः॥ २८॥
परवित्तविलोपनं हि चेदनुकूलं कलयस्यनारतम्।
क्रियमाणमिदं निजेन वा न कथं रोचयसे परेण वा॥ २९॥
अनुकूलमिदं यदोच्यते ननु दस्युं परितोपयेस्तदा।
प्रतिकूलमथोच्यते तदा कुरुषे तत्तु कथं परं प्रति॥ ३०॥
निरवाचि य एष शाश्वतः किल धर्मः स्थिरसत्यमूलकः।
तमसो रिपुरत्र विद्यया प्रथतेसौ महतोद्यमेन च॥ ३१॥
तमसः सुहृदुत्तमं द्विषन्नुदितः पूर्वमधर्म एष यः।
शरणीकृत आसुरैरसावतिबीभत्सनृशंसकर्मभिः॥ ३२॥
सकलात्मनि भूम्नि दैवते त्वपरिच्छिन्नमहर्द्धिशालिनि।
कथमत्र कदापि संभवेन्ननु दोषः खलु पक्षपातजः॥ ३३॥

पञ्चमाधिकरणमारचयति—

शिखासूत्रादिराचारः पालनीयोथवा नवा ।
कस्तस्य पालनेनार्थः फलं स्वर्गादिकं न चेत् ॥ १ ॥
स्वाप्तोक्तमीदृशं सर्वं पालनीयमहैतुकैः ।
हेतुदृष्ट्या पालयंस्तु मूर्खेषु गणनां वहेत् ॥ २ ॥

सूत्राणि—प्रवर्त्तमान आचारो धर्म इत्येके ३—२—३०। तस्याप्तोक्तस्य हेत्वविरुद्धस्यानुष्ठानं विधित्वात् ३—२—३१२। अन्यथौदासीन्यं तत्र विध्याभासे प्रमादवद्भिरनुसृते ३-२-३२। सविषयः स्वस्वस्मृतीनां पित्राद्याज्ञायाश्चेति तत एवावगन्तव्यः ३-२-३३॥

इति तृतीयाध्यायस्य द्वितीयाह्निकम् ॥

---

यदधर्मविवर्जनं तथानुगतिर्धर्मपरायणा सदा ।
इदमेकमुपासनं मतं ननु विश्वात्मनि भूम्नि चिन्मये ॥ ३४ ॥
नियमस्य यथानुपालनं परमोपास्तिरिह प्रशास्तरि ।
अखिलात्मनि धर्मपालनं परमाराधनमिष्यते तथा ॥ ३५ ॥

इत्येव भूमनि चिदात्मनि विश्वरूपे निष्पक्षपातविमले सकलर्द्धियुक्ते ।
आराधनाविधिरवाचि नितान्तकान्तः शान्तात्मनामभिमतः स्थिरधर्मरूपः॥३६॥
(अ०५) आचारजालमपि देशकुलाद्यधीनं धर्माख्यया कतिचिदाहुरदोषजुष्टम्।
कालेन तस्य परिवृत्तिरशाश्वतत्वमद्धा प्रयोजयति तत्सुधियो विदन्तु ॥ ३७।
आप्तोदितं तु विधिरूपतयानपेक्ष्य हेतूनशाश्वतमपि स्फुटमाचरन्ति ।
आचारजालमपदोषमदुष्टभावा भक्त्या पितृष्वथ समाजभयेन वापि ॥ ३८।
ये बालिशाः शिविकयैव वरस्य यात्रा नाश्वेन संततिमिहावहतीति विद्युः।
ते हैतुकास्तु वणिजो गगनारविन्दं विक्रीय संपदमुशन्ति विपत्फलाय ॥ ३९।

इति तृतीयाध्यायस्य द्वितीयाह्निकम् ॥

# चतुर्थाध्याये प्रथमाह्निकम् ।

चतुर्थाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति—

सम्बन्धो ज्ञानविषयः स्वभावो वापि तादृशः ।
सम्बन्धविषयं ज्ञानं स्वभावो नावबुध्यते ॥ १ ॥
ज्ञानं स्वविषयं यत्तत्स्वभावविषयं स्फुटम् ।
सम्बन्धस्तु तदंशानामुभयं विषयोऽस्य तु ॥ २ ॥

सूत्राणि—भक्तिमूलमहेतुकं कर्मोक्तम् ४–१–१ । तत्र ज्ञानाङ्कुरमात्रमपेक्षितम् ४–१–२ । प्रकृतिविज्ञानविकासापेक्षं ममत्वलेशवत्कर्म ४–१–३ । ज्ञानं स्वभावसम्बन्धावगाहि ४-१-४॥

द्वितीयाधिकरणमारचयति—

शास्त्रेण चित्तसंस्कारो मन्त्रैर्भावनया तथा ।
द्रव्यादिसाधनं किं वा, सिध्येद्द्रव्यादि निश्चितम् ॥१॥

---

(अ. १) हेतुमदहेतुकं चेत्युक्तं कर्म द्विधा पूर्वम् ।
बाह्यार्थमुख्यमेकं परं तु भक्तिप्रधानं स्यात् ॥ १ ॥
यत्प्राकृतांशविद्या-विकाससापेक्षमत्र स्यात् ।
तत्सति ममतालेशे कर्मात्राथति पुनर्ज्ञानम् ॥ २ ॥
निष्कामकर्मभक्तेरङ्गं ज्ञानस्य निर्ममत्वं तत् ।
मुख्यं कर्मात्रातः सन्ममतं कामवच्च मतम् ॥ ३ ॥
भक्तिश्च कर्म चेति द्वयं पुनर्ज्ञानपरिनिष्ठम् ।
वक्ष्यत्यनुपदमेतज्ज्ञानं कर्मात्र तु प्रपञ्चयति ॥ ४ ॥

शब्दाद्भावनया वापि द्रव्यसिद्धिरसंगता ।
तस्माच्छास्त्रीयतत्त्वज्ञश्चेतः संस्कुरुते परम् ॥ २ ॥

सूत्राणि—संग्रहाय शास्त्रापेक्षा ४–१–५। शास्त्रं मनःसंस्कारकम् ४–१–६। न शब्दो न च मनोविकारो द्रव्यमुत्पादयति साक्षात्परिवर्त्तयति वा ४–१–७। स्पष्टं तदारुणेरादेशमनुसरताम् ४–१–८॥

तृतीयाधिकरणमाचरयति—

श्रुत्यादिशास्त्रे सकला विषया अल्पकास्तु वा।
श्रुत्यादि दिव्यशास्त्रं यत्सर्वज्ञाननिधिस्ततः ॥ १ ॥
शास्त्रस्य दिव्यः सत्योंशः को विशेषः श्रुताविह ।
ज्ञानस्य न परिच्छेदः शास्त्रमल्पावगाह्यतः ॥ २ ॥

---

अंशानां प्रकृतेर्यद्विज्ञानं कर्मणोऽपेक्ष्यम् ।
तत्स्यात्स्वभावविषयं संबन्धं वावगाहेत ॥ ५ ॥
( अ० २ ) भूतं यन्महदेतन्मूर्तामूर्त्तं प्रकृत्याख्यम् ।
विज्ञानमखिलमस्माज्जीवानां संशयो नात्र ॥ ६ ॥
यावत्तु पूर्वजानां विज्ञानं तस्य संग्रहे विहिते ।
तदुपचयं साधयितुः शक्तेर्न महान्व्ययो भवति ॥ ७ ॥
तस्मादतत्त्ववर्जन-पुरःसरं तत्त्वसंग्रहायात्र ।
पूर्वजशास्त्रापेक्षा न तु शास्त्रमशक्यमद्य निर्मातुम् ॥ ८ ॥
मनसः शास्त्राभ्यासैः संस्काराख्यं फलं साक्षात् ।
शब्दैर्भावनया वा न द्रव्योत्पत्तिपरिवृत्ती ॥ ९ ॥

सूत्रे—शास्त्रविशेषाणां विषयनियमः ४-१-६। विषयान्तरस्पर्शे तत्तच्छास्त्रेण पूर्तिर्यथा भक्ष्यादौ धर्मसंहितायाः ४-१-१०॥

चतुर्थाधिकरणमारचयति—

हरेः स्तम्भोद्भवत्वादि-कथा अत्युक्तयो नवा।
नात्युक्तयश्चिरत्नानां श्रद्धा वाच्युचिता यतः॥ १॥

---

मृत्पिण्डमेकमपि यः परीक्षते मन्मयं सवेत्त्यखिलम्।
एकं परीक्ष्य शब्दं शब्दप्रकृतिं तथैव जानीमः॥ १०॥

तत्त्वातत्त्वविवेकं विधाय यत्नेन शास्त्रेभ्यः।
कार्योऽत्र तत्वसंग्रह उपेक्षितव्यं तु यदतत्वम्॥ ११॥

(श्लो० ३) तत्रापि यस्य विषयो यः स्याच्छास्त्रस्य तस्य तत्रैव।
प्रामाण्यसंभवः स्यात्प्रायो नान्यत्र विषये तु॥ १२॥

स्पृष्टे तु भिन्नविषये तत्तच्छास्त्रेण पूर्त्तिः स्यात्।
भक्ष्याभक्ष्यविचारे स्मृतेर्यथा वैद्यशास्त्रेण॥ १३॥

(श्लो० ४) एका स्वभाववर्णन-शैली रूपकमयी द्वितीया स्यात्।
अत्युक्तिस्तु तृतीया वाचोयुक्तिस्त्रयीत्युक्ता॥ १४॥

तरवो लतावृता इति तरुपुरुषा वल्लिवनिताभिः।
श्लिष्टा इति पुरुषा इह वनिताश्लिष्टा इति क्रमशः॥ १५॥

तदुदाहरणान्यत्र प्रथमा वैज्ञानिकी शैली।
प्रायो वैदिकशैली दृष्टा रूपकमयी कविभिः॥ १६॥

पौराणिक्यत्युक्तिर्मोहं तनुते प्रमादवत्स्वतुलम्।
मत्वा स्वभाववर्णन-शैलीं तां मोहमेति जनः॥ १७॥

व्याहते न क्वचिचछ्रद्धा चिरत्ने वा नवेपि वा ।
तस्मादत्युक्तयः सर्वे वादा एताहशा इह ॥ २ ॥

सूत्रम्—स्वभावोक्तिरूपकात्युक्तिभेदाद्वाक्यार्थानवगतिः४-१-११॥

पञ्चमाधिकरणमारचयति—

ऋषीणां सर्वदर्शित्वं केषामप्यस्ति वा नवा ।
अस्त्यप्रतिहता तेषां दृष्टिः सर्वार्थदर्शिनी ॥ १ ॥
कस्यापि नेहशी दृष्टिः सर्वो हि मितदृष्टिकः ।
परीक्ष्य प्रकृतेस्तत्त्वं नवं जानन्नृषिस्ततः ॥ २ ॥

---

अश्वादिरूपणं यद्रविकिरणादिषु कृतं वेदे ।
किरणादेर्वनिगरणात्सैवात्युक्तिः पुराणेषु ॥ १८ ॥
कफपूयमूत्रशोणितगूथाढ्यं यन्मृतेः पूर्वम् ।
वैतरणीनिरयाद्या तस्यात्युक्तिस्तथैव विज्ञेया ॥ १९ ॥
धनिनो हिरण्यशयने दण्डः स हिरण्यकशिपुवृत्तान्तः ।
वनदाहकार्यशक्त्या चण्ड्या महिषादिविनिपातः ॥ २० ॥
सर्वं पुराणकर्तृभिरत्युक्त्या हन्त परिणमितम् ।
नरनार्यादिकथामयमुदितं महता प्रपञ्चेन ॥ २१ ॥
ईदृग्बृहत्कथादौ निशासहस्रस्य चाख्याने ।
पाषण्डपुस्तकेषु च वन्यकथासु च बहुः प्रपञ्चोस्ति ॥ २२ ॥
सभ्याः कथाप्रपञ्चानेतान्मनसो विनोदाय ।
शृण्वन्ति न पुनरीदृशमत्युक्तिं वास्तवीं प्रपद्यन्ते ॥ २३ ॥
मूर्खास्तु वदनवृद्धिं कण्वायाः सिंहनिर्गमं स्तम्भात् ।
भूकुंभरूपमधुनापि रामसत्त्वं भ्रमदभूमौ ॥ २४ ॥

सूत्राणि—ऋषित्वमनधिगतदर्शित्वं तत्तद्विषये ४–१–१२। तदद्भुतं प्रकृतिखताफलम् ४–१–१३। सा मन्त्रदर्शिता मन्त्राणां नवाविष्कृतरहस्यपिशुनत्वात् ४–१–१४॥

षष्ठाधिकरणमारचयति—

निगमागममन्त्राणां पाठाच्चित्रं फलं न वा।
पाठाद्वृष्ट्यादिकं चित्रं फलं दृष्टं महात्मभिः॥ १॥

---

अवतारबालकैः सह संभाषां विकटपोटानाम्।
विद्युत्संक्रममेवं पतद्ग्रहान्मूर्खभक्तानाम्॥ २५॥
तात्त्विकमेतत्सर्वं प्रख्याप्य जनेषु मुग्धेषु।
परमार्थनाशनपराश्चरन्त्यधन्यामिमां भूमिम्॥ २६॥
दृष्ट्वा पुराणवचने बालान्विश्वासमापन्नान्।
विश्वासयन्ति कितवाः स्वीयेषु जुगुप्सितेष्वसत्येषु॥ २७॥
( अ० ५ ) यावत्पूर्वाधिगतं तस्मादपि बहुतराधिगमः।
प्रकृतिपरीक्षाविधिभिस्तत्तद्विषये ऋषित्वं स्यात्॥ २८॥
तत्र परीक्षाशक्तिर्भक्तिः सत्येनृताज्जुगुप्सा च।
पूर्वजसंक्रान्ता च प्रतिभावस्यानुकूल्यं च॥ २९॥
साधनमीदृगपेक्ष्यं न पुनर्जन्मान्तरीयसंस्कारः।
देवविशेषकृपा वा मन्त्रजपादिप्रपञ्चो वा॥ ३०॥
आध्यात्मिकतादम्भः समाधिमूर्च्छानिपातो वा।
परचिन्तासंक्रान्तिः प्रतीकचरणादिसेवा वा॥ ३१॥
मन्त्रा वाक्यानि नवाविष्कृततत्त्वस्य सूचकानि यतः।
तादृशतत्त्वालोकनमिष्टं किल मन्त्रदर्शनं सुधियाम्॥ ३२॥

शब्दपाठात्फलं नेहक् तस्मात्कार्योपयोगिता ।
मन्त्राणामिति सिद्धान्तः किं शुष्कैरत्र चर्वणैः ॥ २॥

सूत्राणि—ते स्पष्टार्थबोधकाः सांकेतिकाश्च ४–१–१५। विध्युपयोग्यर्थबोधकत्वेन तदुपयोगः ४–१–१६ । क्रियानुपयोग पाठो निष्फलो विशेषतोऽर्थाग्रहे ४–१–१७ । रसादिबीजत्वेन सांकेतिकानां विध्युपयोगः ४–१–१८ ॥

सप्तमाधिकरणमारचयति—

संस्कृतेनात्र चित्तेन सिद्धिः संकल्पजा नवा ।
अस्ति संकल्पजा सिद्धिरीशाद्याकृष्टिकारिणी ॥ १ ॥

---

(अ० ६) मन्त्रा द्विविधा दृष्टाः केचित्स्फुटमर्थबोधका यथा श्रुतिषु ।
सांकेतिका इहान्ये विदिता नागार्जुनादिलेखेषु ॥ ३३ ॥
तत्रोपयोग उक्तः श्रौतानामरणिमन्थनादिकार्येषु ।
ह्रां ह्रीमित्यादीनां विषादियोगप्रकारेषु ॥ ३४ ॥
अर्थानपेक्षशब्दाम्रेडनमात्रं तु निष्फलं नूनम् ।
किंवा परप्रतारणमात्रफलं रामनामघोषणवत् ॥ ३५ ॥
रामेति यथा घुष्यन्मोदकमाकर्षति स्वयश्चैव ।
मन्त्राडम्बरकुशलस्तथैव मुग्धान्प्रलोभयति ॥ ३६ ॥
उपदिश्य वारिसेकं ज्वरे यथा किल भिषग्धूर्त्ताः ।
खड्गे व्ययेन महता विदधुर्भेषजविरचनं सुचिरम् ॥ ३७ ॥
एवं मान्त्रिककितवा विषयोगैर्मारणादि कुर्वाणाः ।
मन्त्रस्य तर्पणाद्यैः सिद्धिं विदधुः परान्प्रतारयितुम् ॥ ३८ ॥

दधिसंकल्पमात्रेण कश्चिन्न लभते दधि ।

संकल्पसिद्धिश्चित्तस्य संस्कृतस्यापि नास्त्यतः ॥ २ ॥

सूत्रे—असंस्कृतेन मनसा फले निकर्षः प्रायो व्याहतानुसरणात् ४-१-१६ । संस्कृतेन तदुत्कर्षः ४-१-२० ॥

---

(अ० ७) गणिताद्यसंस्कृतं मनउद्दामतया प्रकल्पयति ।

चिन्तादिशक्तिवशतः खस्वारथपुष्पकोड्डयनम् ॥ ३९ ॥

ईदृग्ज्ञानसमोदक-भक्षणकुशलाश्चरन्ति शकटेषु ।

रज्जुनिबद्धेषु चिरं गायन्तः पुष्पकस्तोत्रम् ॥ ४० ॥

गणितादिकौशलाढ्यः सुमहोद्योगस्तु यन्त्र णि ।

नवनवतराणि घटयन्खखोड्डयनार्थिनो हसति ॥ ४१ ॥

रामस्य चिन्तया किल पुष्पकमागात्कुबेरभुवः ।

वाशिष्ठशब्दशक्त्या रथो दिलीपस्य नाकमगात् ॥ ४२ ॥

आस्वाद्येति विमुह्यन्त्यन्त कविस्वप्नपीयूषम् ।

विज्ञानमधःकुर्वञ्शास्त्रीकृत्याञ्जतां घोराम् ॥ ४३ ॥

कौलेन्द्रजालिकाद्यैर्गुह्यादिनिगूहितं द्रव्यम् ।

आकृष्य दर्शयद्भिश्चकितमतिर्द्विगुणसंमोहः ॥ ४४ ॥

पेटाभिर्विकटाभिर्मूर्खैरन्यैर्भुक्तुंसिश्च ।

सांकल्पिकभावादिस्तुतिभिस्त्रिगुणीकृतं वहन्मोहम् ॥ ४५ ॥

प्राणज्योतिर्दर्शक-यन्त्रादिकथाभिरन्नतपत्रादौ ।

दृष्टाभिः परितुष्यन्मोहेन चतुर्गुणेन ततः ॥ ४६ ॥

कृष्णाचीवरभावं कृष्णस्य किल स्तुवद्भिरथ ।

मंथव्याख्यातृवरैः पञ्चगुणत्वोपचितमोहः ॥ ४७ ॥

अष्टमाधिकरणमारचयति—

आरब्धारम्भयोः कश्चिद्गुणभेदो भवेन्नवा ।
गुणभेदो न भवति कार्यकारणयोः क्वचित् ॥ १ ॥
दृष्टस्तुलादिसाम्येपि गुणभेदो महानिह ।
वायुद्वयस्य संयोग-विशेषेम्बुसमुद्भवात् ॥ २ ॥

सूत्राणि—सति द्रव्ये तूभयत्रान्यथा ह्यासद्वादापत्तिः ४-१-१२। न नूतनमन्यत्र तत्त्वयोगात् ४-१-२२। तत्रापि तुलादिसाम्यम् ४-१-२३। अघटितत्वेन ज्ञानं तत्त्वम् ४-१-२४।

---

बालो भारतवासी कलाकुमारः कलाध्यक्षः ।
आचार्यो वा दर्शन-काव्यादेर्नश्यति प्रायः ॥ ४८ ॥
(अ० ८) भावनया वा शब्दैरपि वा द्रव्यस्य नोत्पत्तिः ।
द्रव्याणामिह योगाद्द्रव्यं घटकैर्हि सद्व्यं स्यात् ॥ ४९ ॥
योगेपि तु नाभिनवं कार्यमिहान्यत्र तत्त्वयोगात्स्यात् ।
तत्त्वानामपि योगे न तुलादौ भवति परिवृत्तिः ॥ ५० ॥
तत्त्वान्यत्रोपश्रुतान्यद्यावधि निश्चितानि विद्वद्भिः ।
अघटितमिति यज्ज्ञातं तत्त्वं तत्संमतं सुधियाम् ॥ ५१ ॥
अघटितमिति यत्संप्रति विज्ञातं तस्य घटितत्वम् ।
अम्बुन इव संभाव्यं वायुद्वययोगघटितस्य ॥ ५२ ॥
घटनादि निश्चितं यद्यावत्तेनोत्तरं कार्यम् ।
अद्भुतमिह घटते यत्तस्माद्विज्ञानमिदमेव ॥ ५३ ॥
नान्तिममिह विज्ञानं किमपीति ज्ञानमेव विज्ञानम् ।
प्रथमं तेन विनायं मनुजः पशुरेव विज्ञेयः ॥ ५४ ॥

नवमाधिकरणमारचयति—

निराकारात्समुद्भूतं साकारं सकलं नवा ।
निर्गुणाच्च निराकारादीशात्सर्वसमुद्भवः ॥ १ ॥
निर्गुणं च निराकारं तत्त्वं नास्तीह किंचन ।
तत्स्वीकारे त्वसद्वादः कार्यं स्वाकारविप्लवे ॥ २ ॥

---

भ्रान्तिमिह विज्ञानं श्रौतादीति प्रपद्य मोहान्धः ।
विज्ञानस्य विवृद्धौ न चेष्टते हन्त हतबुद्धिः ॥ ५५ ॥
वेदादौ विज्ञानं पूर्णं परिशुद्धिरहितं च ।
शिल्पकलागणितादिकमपूर्णमेवेह सर्वमिदम् ॥ ५६ ॥
मूर्खाणां प्रतिपत्तिर्वेदाद्यविज्ञानतामेषा ।
न हि विज्ञानं वैदिकमवैदिकं वा स्थिरं किञ्चित् ॥ ५७ ॥
श्रौतादरणिविमन्थात्साधीयानग्निसंभवोऽद्य यथा ।
स्फुरकशलाकाघर्षादेवं विज्ञानमात्रेऽपि ॥ ५८ ॥
न स्थिरता विज्ञाने नेशात्मादौ तथैकमत्यं च ।
न तु तेन कार्यहानिर्विज्ञानवतां कदापि संभवति ॥ ५९ ॥
विज्ञानस्यापूर्त्तिं पश्यन्नज्ञानमिच्छेत्कः ।
पद्भ्यां स्खलन्न मनुजः प्राणायामैः खमुड्डयते ॥ ६० ॥
उपवासपरो मूर्खो विशर्करं भोज्यमुपहसतु ।
प्रतिवेशिजनस्य कथं नापत्रपया विहीनश्चेत् ॥ ६१ ॥
निर्विज्ञानः कथमिव विज्ञानमपूर्णमुपहसतु ।
संकल्पसिद्धिघोषैर्मूर्खाणां चेत्प्रतारितो न भवेत् ॥ ६२ ॥
( अ० ६ ) साकारमेव सर्वं तस्माद्वैचित्र्यमेकमुपमद्य ।
वैचित्र्यान्तरमन्याकारविमर्दात्समुद्भवति ॥ ६३ ॥

सूत्रे—सर्वस्य साकारत्वादाकारोपमर्दः सर्वश्च ४-१-२५। न निराकारादाकारोद्भवः पुनरप्यसद्वादापत्तेः ४-१-२६ ॥

दशमाधिकरणमारचयति—

सर्वात्मा चेतनोयं वा स्यादथाचेतनोपि वा।
भक्तानुग्रहकृत्याद्यैश्चेतनः स्यादसौ स्फुटम् ॥ १ ॥
अस्मिन्नवान्तरो भेदश्चेतनाचेतनाभिधः।
तस्मादस्मिन्विकल्पोयं सर्वथैवासमंजसः ॥ २ ॥

सूत्र—अवान्तरभिदा चेतनाचेतनाख्या ४-१-२७। चेतनस्योपायविकल्पो नत्वचेतनस्य ४-१-२८ ॥

---

आकारस्योद्भूतिर्न निराकारात्कथञ्चित्स्यात्।
एवं स्वीकारे स्यादसत्समुद्भवकथा यस्मात् ॥ ६४ ॥
(अ० १०) प्रकृतौ साकारायां किञ्चिच्चेतनमचेतनं तु परम्।
कृत्स्नायां न प्रकृतौ चेतनता तद्विपर्ययोप्यथवा ॥ ६५ ॥
यस्योपायविकल्पस्तच्चेतनमभिमतं विदुषाम्।
यस्य तु नियतैव गतिस्तदचेतनमिष्यते जगति ॥ ६६ ॥
अयसोयस्कान्तं प्रति ऋजुरेवैका गतिर्नियता।
नतु पार्श्वतो विलङ्घनमवान्तरस्थस्य तत्कुरुते ॥ ६७ ॥
तस्मादचेतनं तत्पिपीलकश्चेतनस्तु मतः।
योपद्यात्यचकणं गतिघातमवलम्ब्य यत्नेन ॥ ६८ ॥
श्रृंगारादेरुचिते योगे सति बीजपुद्गले जाते।
उद्भवति चेतनेयं नश्यति पुद्गलविघटने च ॥ ६९ ॥

एकादशाधिकरणमारचयति—

जन्मान्तराद्यदृष्टस्य दैवाख्या वा परस्य वा।
दैवं जन्मान्तरादृष्टं तदधीनाश्च जन्तवः ॥ १ ॥
अयत्नसिद्धं दैवं स्याद्यत्नः स्यादिह पौरुषम्।
फलमेतद्द्वयाधीनं निश्चितं सुधियामिदम् ॥ २ ॥

सूत्राणि—भूतभवतामयत्नसिद्धानां यत्नस्य च फलं भावि ४-१-२९। अयत्नसिद्धं दैवं यत्नः पुरुषकारः ४-१-३०। उभयमपेक्षितं सर्वत्र ४-१-३१ ॥

---

सा बुद्धिर्वेदनाकृति-शक्तिमयी केन्द्रमात्मीयम्।
रचति निजेऽधिकारे यथाकथं चित्तदायता ॥ ७० ॥
(अ० ११) भूतं भवच्च यावत्तदयत्नोपनतमेव स्यात्।
दैवमथ पुरुषकारो यत्नः फलमेनयोर्भावि ॥ ७१ ॥
चेतनमचेतनं च प्रकृत्याद्युभयं यतो दृष्टम्।
न च सर्वज्ञः कश्चिद्विभाव्यते सर्वशक्तिर्वा ॥ ७२ ॥
नियता ननु विनियम्या प्रकृतिर्दृष्टा यतश्चैषा।
तस्मात्प्रकृतेर्भिन्नो न नियन्तास्यास्तु कोऽप्यस्ति ॥ ७३ ॥
यावच्च भक्तवर्यः प्रार्थनया हन्त सूर्यगतिम्।
रोधयति तावदस्या न नियन्तान्योऽनुमेयः स्यात् ॥ ७४ ॥
वह्निर्दहन्यथेच्छं गिरिकाननपुरवराग्रामान्।
अनियन्तृको नियन्तरि शक्ते चुल्लीमुखे बद्धः ॥ ७५ ॥
चुल्लीनियम्यताग्नेरिव सूर्यादेस्तु भक्तानाम्।
प्रत्यक्षदर्शनीयः कार्यवशाच्चेद्विनियमः स्यात् ॥ ७६ ॥

द्वादशाधिकरणमारचयति—

ज्ञानं परमहंसानां मूर्च्छाद्यैरद्भुतं नवा ।
मूर्च्छाद्यैरद्भुतं ज्ञानं दृष्टमेव महात्मनाम् ॥ १ ॥
मूर्च्छाया ज्ञानशत्रुत्वं योगस्त्ववहितिर्मता ।
तत्तत्कार्यैं फलोत्कर्षो योगादित्यतिरोहितम् ॥ २ ॥

सूत्राणि—योगमूर्च्छासमाध्यादि न संभाव्यं सर्वत्र संभवे

---

नूनं तदाभ्युपेयो विनियन्तान्यः प्रकृत्याः स्यात् ।
प्रह्लादादिकथाभ्यो न पुनर्विनियामकानुमितिः ॥ ७७ ॥
पत्युरसामञ्जस्यात्प्रकृतिश्चेत्यादि कथयंस्तत् ।
अभ्युपगच्छति युक्तिभिरपि भगवान्बादरायणः स्पष्टम् ॥ ७८ ॥
अंगोह्ययत्नसिद्धो यत्नश्चापेक्षितं कार्यं ।
प्रथमो न स्वाधीनः कार्ये तस्माद्द्वितीयेन ॥ ७९ ॥
(अ० १२) व्याधिरपस्मारादिर्भक्षणमहिफेनमुख्यानाम् ।
गरलानां च निमित्तं मूर्च्छाया लिङ्गवत्सु मतम् ॥ ८० ॥
ईदृङ्मूर्च्छादि जने संभाव्यं नैव सर्वत्र ।
यत्र तु दृष्टं तेषां न धीप्रकर्षोऽद्भुतो दृष्टः ॥ ८१ ॥
योगस्तु चित्तवृत्तेर्निरुध्य कुत्रापि संगमनम् ।
अवधानेनाभिन्नं प्राणायामादि साधनं तस्य ॥ ८२ ॥
सत्यवधानेच्छात्रोऽभ्यासाच्छापाठि जानीते ।
श्रेष्ठी मूलधनस्योपयोगतो बहु धनं भजते ॥ ८३ ॥
अन्येप्येवमवहिताः स्वं स्वं कार्यं विधाय साफल्यम् ।
यान्ति प्रकृष्टमेतद्विदुषामतिरोहितं सर्वम् ॥ ८४ ॥

वा निष्फलम् ४-१-३२ । योगश्चित्तवृत्तिनिरोध इति पतंजलिः ४-१-३३ । तस्यावधानरूपत्वात्सति तस्मिंस्तत्तत्कार्ये फलोत्कर्षः ४-१-३४ । प्राणायामाद्यवधानमात्रसाधनम् ४-१-३५ । समाधिस्तन्मयत्वम् ४-१-३६ । तमश्चेष्टावागवधानानामुत्तरोत्तरमुत्कर्षः ४-१-३७ ॥

---

न पुनः प्राणनिरोधादपि वा मूर्छागमेन जनः
पठनं विनैव विद्वान्मूलधनाद्यन्तरेण धनिको वा ॥ ८५ ॥
योगोवधानमात्रं तस्य विशेषः समाधिः स्यात् ।
स च तन्मयत्वरूपः परः प्रकर्षोवधानस्य ॥ ८६ ॥
सूचीकारः सूचीं कुर्वन्चरयात्रया गतया ।
अभिवक्त्रहास्तिकतौर्यत्रिकसंभ्रमतयापि नाज्ञिप्तः ॥ ८७ ॥
सोयं तस्य समाधिस्तेन महत्कर्मसाफल्यम् ।
योगं कर्मसु कौशलमाहार्जुनसारथिर्भगवान् ॥ ८८ ॥
किञ्चिद्बाल्यमतीतस्तन्द्रां बहु मन्यते प्रायः ।
शयनासनादिसौख्यं वाञ्छन्नुद्योगमन्तरेण सदा ॥ ८९ ॥
दुःखाक्षपक्षभयाद्वा यदि वाञ्छन्नुद्यमं तु तदा ।
हलवहनं बहु मनुते न पुनः कष्टं गुरौ वासम् ॥ ९० ॥
विद्यामधिगच्छन्नपि वुञ्छणाकठजिलमुखाञ्छब्दान् ।
रटति प्रायो रसनामहर्निशं खेदयन्मूढः ॥ ९१ ॥
कश्चिद्विरलो मनसावहितेन पदे पदे तत्त्वम् ।
भूयः परीक्षमाणः सुमहोद्योगः प्रयाति विज्ञत्त्वम् ॥ ९२ ॥

अथोदशाधिकरणमारचयति–

कीलनं किल शापो वा मन्त्राणां वार्थविस्मृतिः ।
शापः स्यात्कीलनं तद्धि प्रसिद्धं मन्त्रवेदिनाम् ॥ १ ॥
शापादि कल्पनामात्रं कीलनं त्वर्थविस्मृतिः ।
विषाद्यनुपयोगो वा राजदण्डादिभीतितः ॥ २ ॥

---

विज्ञाने प्रत्यूहा लोभाद्याः सुबहवस्तत्र ।
सुमहान्प्रत्यूहोयं भक्तिर्या सिद्धकितवेषु ॥ ९३ ॥
हिमगिरिशिखरे दृष्टान्कलाकुमारैरपि प्रायः ।
यावपरमाणुरन्ध्र-प्रवेशकुशलान्महासिद्धान् ॥ ९४ ॥
सप्तर्षिमण्डलाद्यं सहसोड्डीय क्षमानस्प्रष्टुम् ।
श्रोषधिविशेषलेहाद्वर्षं शान्तक्षुधावेगान् ॥ ९५ ॥
सिद्धपुरे शर्मयेप्वथवा बालान्विमूर्छयितुम ।
कुशलान्पाश्चात्यविदः प्रेतपिशाचादिदर्शने कृतिनः ॥ ९६ ॥
विकटाः पेटाः काश्चित्कृष्णाद्यवतारकुशला वा ।
स्थविरभूकुंसविटानाम पुनरात्मरूपेण ॥ ९७ ॥
मर्मयितुमवनौ शक्तान्व्यपादिश्य जनेषु मुग्धेषु ।
अर्चां विद्याक्रमे सिद्धिविभूतिषु रुचिं च रुचिरासु ॥ ९८ ॥
उत्पादयन्ति महतीं शिल्पं शास्त्रं च नास्तिक्यम् ।
उच्चैः प्रघोषयन्तः शिशुनाशायैव लब्धजन्मानः ॥ ९९ ॥
( श्र. १३ ) अर्वाचीने यद्वद्रसशास्त्रे मातृकाभिरिह ।
संज्ञानां व्यवहारस्तथा चिरत्नेपि तन्त्रादौ ॥ १०० ॥

सूत्रे-सांकेतिकानां रसादिबीजत्वमुक्तमर्वाचीनइव रस-शास्त्रे ४-१-३८। तद्विस्मृतिः कीलनं स्मरणे वानुपयोगः प्रशास्तकानां विज्ञतरत्वे ४-१-३९ ॥

इति चतुर्थाध्यायस्य प्रथमाह्निकम् ॥

---

कैरवरैः पुनः किं गरलाद्युक्तं न तत्स्मरन्त्यधुना ।
तस्मात्कीलनदग्धान्मन्त्रान्प्रवदन्ति मान्त्रिका मुग्धाः ॥ १०१ ॥

अथ योगचूर्णमुग्रं यत्कल्पितमभयदत्ताद्यैः ।
ज्ञातेनापि फलं किं तेनारिषु हन्त विज्ञेषु ॥ १०२ ॥

मूर्खा हि राजपुरुषा यदा कदाचिद्भवन्ति स्म ।
धूर्ता मन्त्रजमूचुर्विषकृतमपि मारणादि तदा ॥ १०३ ॥

अद्य तु चाणक्यादपि विज्ञतरेषु प्रशास्तृषु ।
कुर्वन्विषादियोगं प्रायः कितवो निगृह्येत ॥ १०४ ॥

इति कीलितान्स मन्त्रान्व्यपदिशति तथापि मूर्खेषु ।
ग्राम्येषु मन्त्रशक्तिं प्रथयति गौल्मिकजनाज्ज्ञातः ॥ १०५ ॥

धृष्टास्तु केचिदधुनापि महासभासु
धर्मोपदेशगतराजभयाः सदर्पम् ।
उद्घोषयन्ति महतीं ध्वनिभावनादेः
सिद्ध्यष्टकादिजननीं महनीयशक्तिम् ॥ १०६ ॥

दूरेण तान्परिहरन्किल कालकूट-वृन्दानिव प्रचरतः शिशुनाशनाय ।
सोऽयं निरस्य सुमतिः सततप्रमत्तः स्याद्यत्नवान्नियतसंपदि शिल्पशास्त्रे ॥ १०७ ॥

इतिचतुर्थाध्यायस्य प्रथमाह्निकम् ।

# चतुर्थाध्याये द्वितीयाह्निकम् ।



चतुर्थाध्याये द्वितीयाह्निके प्रथमाधिकरणमारचयति-

कायेन समवेतौ वा सूक्ष्मजीवौ युतौ तु वा ।
परलोकादिगमनाद्युतौ स्यातामिमौ स्फुटम् ॥ १ ॥

उत्क्रमादेरसिद्धत्वात्तयोः पृथगदर्शनात् ।
कायेन समवेतौ तु सूक्ष्मजीवाविति स्थितम् ॥ २ ॥

सूत्राणि-शरीरभेदाज्जीवभेदः ४-२-१ । शरीरात्मनोरयुतसिद्धिर्न सिद्धयोर्योगः ४-२-२ । अयुतसिद्धिरभेदो बादरायणादीनाम् ४-२-३ । तथा सूक्ष्मस्य ४-२-४ । नोत्क्रमणं विज्ञानात्मनः सूक्ष्मस्य वा तथा च याज्ञवल्क्यः ४-२-५ ॥

द्वितीयाधिकरणमारचयति-

परिणामितया भूम्न उच्छित्तिः संभवेन्न वा ।
उच्छित्तिः संभवेदेव परिणामात्प्रकल्पिता ॥ १ ॥

---

( अ. १ ) शरीरभेदादिह जीवभेदो भेदस्य किं स्यादपरं प्रयोक्तृ ।
कायद्वये स्याद्यदि जीव एको ब्रह्मैव सर्वात्मकमेतदस्तु ॥ १ ॥
कायात्मनोर्नैव पृथक्प्रसिद्धिर्न सिद्धयोर्योग इहानयोस्तत् ।
विनिश्चितैवायुतसिद्धिरस्मात्तर्कप्रपञ्चैस्तु किमत्र शुष्कैः ॥ २ ॥
यौ नाममात्रेण पृथक्पदार्थौ प्रकल्पितौ तार्किकमुग्धडिम्भैः ।
तयोः प्रसिद्धायुतसिद्धिरस्माच्च तद्वतोर्वास्तवभेदमाहुः ॥ ३ ॥
पृथक्शरीराच्च यथात्मतत्त्वं तथैव चित्तादिमयोऽपि सूक्ष्मः ।
पृथङ्न तस्मात्समवेत एव तस्मिन्निति स्पष्टमुशन्ति तज्ज्ञाः ॥ ४ ॥

सर्वस्य परिणामित्व ऽसर्वोच्छेदाद्यदर्शनात् ।
उच्छित्तिः संभवेन्नैव कदापि सकलात्मनः ॥ २ ॥

सूत्राणि-अविनाश्यनुच्छित्तिधर्मा सर्वात्मा ४-२-६ । तस्मिन्परिणामादि ४-२-७ । नोच्छित्तिस्ततोऽनुमेया प्रतिबन्धाग्रहात् ४-२-८ ॥

तृतीयाधिकरणमारचयति-

शब्दावलम्बाङ्गदाय जनेषु च परिग्रहः ।
परलोकगमस्यास्तु न वा, सोऽस्तु सतां मतः ॥ १ ॥

---

कुम्भे विनष्टे न हि तस्य दैर्घ्यमुत्क्रम्य कुत्रापि बहिः प्रयाति ।
तथैव सूक्ष्मस्य न चात्मनोऽपि बहिर्गमः स्यात्पतिकृते शरीरे ॥ ५ ॥
तान्येव विज्ञानघनोऽनु नश्यत्यन्नासवीनुत्क्रमिणास्तथेति ।
सद्युक्तिगाढां गिरमुज्जगार महर्षिधुर्यो ननु याज्ञवल्क्यः ॥ ६ ॥
( अ. २ ) जीवस्य कायानुविनाशितास्मात्सर्वात्मनः शाश्वतता मता तु ।
सनातनः सर्वगतोऽयमात्मा धनञ्जयस्यन्दनभूपणोक्तः ॥ ७ ॥
अस्मिंश्च सर्वात्मनि चित्समुद्रे तडित्तरङ्गाम्बरपूरपूर्णे ।
छायापथावर्त्तिनि भूरितारा-फेनाञ्चिते प्राणिसहस्रवासे ॥ ८ ॥
लसद्ग्रहोपग्रहकेतुजातप्रवालजालोपचितान्तराले ।
शश्वद्बृहन्तोः परिणामधारा वहन्ति संसारततोरपाराः ॥ ९ ॥
तत्त्वं तदेतत्परिणामि नित्यं दृष्टं हि नात्रापरिणामि किंचित् ।
सर्वात्मनोच्छित्तिरसंभवैव कस्यापि सर्वात्मनि सा कथं स्यात् ॥ १० ॥
नश्यन्विशेषः परिणाममेति परे विशेषे सुधियां स्फुटं तत् ।
इयं तु नित्या परिणामधारा संसारवारांनिधिरेतदात्मा ॥ ११ ॥

अर्थवादे न शब्दस्य प्रामाण्यं धर्मवादिनाम् ।

स्वस्वधर्मस्य च श्रैष्ठ्यादूव्यर्थौ लोकपरिग्रहः ॥ २ ॥

सूत्राणि–न शब्दविरोधः शब्दस्य विधिमात्रे प्रामाण्यात् ४–२-६ । अभेदो वेश्याविदुषोः शब्दावलम्बेन परलोकस्वीकर्तुः ४–२–१० । न शिखादित्यागो निष्कारणधर्मावलम्बिनाम् ४–२–११ ॥

---

( श्र० ३ ) जीवस्य कायानुविनाशिता या शब्दोऽपि दृष्टः प्रतिपादयंस्ताम् ।
शब्दैर्विरोधेऽपि परैर्न हानिर्विधौ हि शब्दो भवति प्रमाणम् ॥ १२ ॥
शब्दात्प्रमाणादथवाभ्युपेऽपि जीवस्य नाकादिममं महात्मन् ।
शब्दः प्रमाणं तव पूर्वजानां नैवापरेषामिति कोऽत्र हेतुः ॥ १३ ॥
धर्मान्तरीयास्तव धर्ममेव वदन्ति शश्वच्चिरयस्य हेतुम् ।
धर्मान्तराणि प्रथयस्यजस्रं त्वं चातिदृप्तो विनिपातहेतून् ॥ १४ ॥
भवन्मते पण्यविलासिनीनां वासाय घोरो निरयः परत्र ।
धर्मान्तरीया अथ ता भवन्तं दिदृक्षमाणा निरयेतितुष्टाः ॥ १५
स्वर्गाधिकारी स्वमतेन सर्वः परैः प्रपञ्चो नरकाधिकारी ।
कस्यार्थवादेषु तदीदृशेषु वचः प्रमाणं भविता जनस्य ॥ १६ ।
स्वर्गाद्यभावेऽपि शिखादिकस्य त्यागो न निष्कारणधर्मभाजाम्
तदित्थवेशाय सुरस्त्रियै या तद्यस्य निर्वेदमुपैतु मोक्षः ॥ १७ ॥
( श्र. ४ ) सर्वात्मके ब्रह्मणि कायपष्टिर्वियत्यमेये किल नालिकेव ।
सूचीप्रचारस्वनशक्तिवच्च कायानुगा राजति जीवशक्तिः ॥ १८
वियत्समं स्थाणु च सर्वगं च देहात्कथं ब्रह्म परैतु देहगः
शरीरमंतचनु नालिकेव शीर्यत्यवश्यं गमनं न तस्य ॥ १९ ॥

चतुर्थाधिकरणमारचयति-

भूम्नः कायस्य जीवस्य कस्याप्यस्त्युत्क्रमो नवा ।
अस्तु कस्यापि वस्त्रादित्यागौपम्यस्य दर्शनात् ॥ १ ॥
भूम्नः सर्वात्मकत्वं यच्छरीरं तु विशीर्यति ।
शरीरात्तुर्विनाशी च जीवः कस्योत्क्रमोस्त्वतः ॥ २ ॥

सूत्राणि-ब्रह्म शरीरं जीव इत्याकाशो नालिका सूचीप्रचार-नादादीतिवत् ४-२-१२ । न ब्रह्म शरीरान्तरमायात्याकाशवद्विभु नित्यं स्थाणु ४-२-१३ । शरीरं शीर्यति तस्य हि तन्निरुक्तम् ४-१-१४ जीवः पुञ्जोद्भवत्वान्नासति पुञ्जे ॥ ४-२-१५ ॥

---

पुञ्जोद्भवत्वाद्भविता क्व जीवः पुञ्जे विशीर्णे निधनस्य काले ।
नाशं व्रजन्त्यां नहि नालिकायां तस्याः स्वनं चुम्बति नालिकान्या ॥२०॥
उड्डीय वा प्रेतपिशाचरूपः स्वनो न कुञ्जे गिरिगह्वरे च ।
कूजत्यसौ नालिकया वियुक्तो रामो विदेहाधिपकन्ययेव ॥ २१ ॥
( ध्र· ५ ) सर्वात्मनो बिम्बसमानता चेज्जीवश्च तस्य प्रतिबिम्ब एषः ।
शरीरमादर्शनिभं तयेदं ततोपि जन्मान्तरवाच्च जीवः ॥ २२ ॥
बिम्बग्रहायोग्यमपास्य धात्रचादर्शमन्यं प्रतिबिम्बपिण्डः ।
नैवोपलब्धो न तथैव जीवो मृताच्छरीरादपरं प्रयाति ॥ २३ ॥
स वान्निशोत्प्रेक्ष्यपिशाचवद्वा परिस्फुटं पञ्जरपक्षिवद्वा ।
जीवोभविष्यद्यदि हन्त तस्य तदैव जन्मान्तरमप्यसेत्स्यत् ॥ २४ ॥
योगी परो वात्मशरीरकोशादात्मानमुद्धृत्य परत्र यावत् ।
न दर्शयेत्प्रेतकथाप्रवादैः पृथक्क आत्मानमवैतु तावत् ॥ २५ ॥

पञ्चमाधिकरणमारचयति-

जीवस्य प्रतिबिम्बत्वे भवेत्तस्योत्क्रमो न वा ।
भवेदेवोत्क्रमस्तस्य भिक्षवोऽपि तथा विदुः ॥ १ ॥
आदर्शनाशे नाशो हि प्रतिबिम्बस्य दृश्यते ।
तस्मान्न प्रतिबिम्बत्वेऽप्युत्क्रमः किल सिध्यति ॥ २ ॥

सूत्रे-मुकुरप्रतिबिम्बवद्वा ४-२-१६ । शरीरान्तरगो हि पिशाचवत्पञ्जरपक्षिवद्वा ४-२-१७ ॥

षष्ठाधिकरणमारचयति-

स्तन्यचूषणशक्त्यादि पैतृकं वाऽन्यजन्मजम्
जन्मान्तराभ्यासजं तत्स्फुटमुक्तं मनीषिभिः ॥ १ ॥
पैतृकं तु मनुष्याद्याकृतिवत्तत्समञ्जसम् ।
अलं तदर्थं जीवस्य जन्मान्तरविकल्पनैः ॥ २ ॥

सूत्रम्—न पूर्वजन्मसंस्कारः पूर्वजशक्तिस्त्वयस्कान्तवत् ४-२-१८ ॥

---

ब्रह्मैकरूपे न विवर्तभावे न नापि बिम्बप्रतिबिम्बभावे ।
जीवः शरीरं विकृतं विहाय गन्तुं शरीरान्तरमत्र शक्तः ॥ २६ ॥
(अ० ६) स्तनन्धये स्तन्यविचूषणादिशक्तिर्न जन्मान्तरसंस्क्रिया सा ।
मनुष्यरूपादिवदागतोऽसौ दायस्तु तस्मिंश्चिजपूर्वजेभ्यः ॥ २७ ॥
पित्र्यान्मजोऽपि हि गुणानवस्या कृतैर्विदोषैः सह नात्र शङ्का ।
प्रवर्तितो दीप इह प्रदीपाद्गुणान्प्रदीपस्य दधाति नूनम् ॥ २८ ॥

सप्तमाधिकरणमारचयति-

भोगोवशिष्टो जीवस्य स्वर्गादौ संभवेन्न वा ।
संभवेदेव नाशः स्यात्किमभुक्तस्य कर्मणः ॥ १ ॥
साक्षाद्भोगः शरीरेत्र तत्संसर्गात्परेषु च ।
ज्ञानिनोपि ह्यमुक्तिः स्याज्जन्मान्तरविकल्पने ॥ २ ॥

---

शैत्यादिसंयोगवशादिदानीं बालः स्तनं यो न पिबेद्रुजार्त्तः ।
दृष्टेपि शैत्यप्रभृतौ निमित्ते तर्कस्तदर्थं किमु पूर्वजातेः ॥ २६ ॥
(श्र॰ ७) भोगोपि साक्षादिह कर्मणः स्यादेकत्र जन्मन्यखिलस्य नूनम् ।
भोगस्तु पारम्पारिकः सुतादौ स्फुटस्तदर्थं परजन्मनालम् ॥ ३० ॥
यस्यावशिष्टं निधने फलं तु परत्र भोगो न समञ्जसोस्य ।
दण्डो हि पापस्मरणे स्मृतिश्च न पूर्वजातेरुपलभ्यतेत्र ॥ ३१ ॥
सुरां पिबन्यो म्रियते न तस्य पाकः सुराया न मदोपि दृष्टः ।
मतस्य पाको न यथा मदो वा तथैव पापं न सुरावलेहात् ॥ ३२ ॥
परात्जन्मादि च कल्पयन्ति दण्डं मुधा दुर्धिय एव नूनम् ।
प्रीतिर्वराहस्य यथा स्वभोज्ये तथाज्यपानेपि मठाधिपस्य ॥ ३३ ॥
अभुक्तमत्राथ कृतं परत्र फलं ददातीति कुतर्कणा ते ।
मद्येन लीढेन मृतिक्षणेपि मदः प्रकल्प्यो निलये सुराणाम् ॥ ३४ ॥
अनादिजन्मान्तरकर्मराशेरनन्तजन्मान्तरभोग्यता चेत् ।
ज्ञानेपि मुक्तिर्भविता न पुंसामन्यादृशं ज्ञानवशाच तत्त्वम् । ३५ ॥
जीवा अनेके किल पक्षितुल्याः कार्येषु चेत्पञ्जरसन्निभेषु ।
स्वर्गादिभोग्यो यदि कर्मराशिर्मुक्तिः खपुष्पप्रतिमा तदासीं ॥ ३६ ॥

सूत्राणि-साक्षाद्भोगस्त्वेकेनैव जन्मना ४-२-१९ । पारम्परिकः संसर्गात् ४-२-२० । आमुष्मिकभोगकल्पने मुक्त्यभावः ४-२-२१ । सुहृदादौ संक्रम इति चेन्निधने सर्वेषामविशेषः ४-२-२२ ॥

अष्टमाधिकरणमारचयति-

स्वर्गादिकल्पना धर्मे जनान्वर्त्तयते न वा ।
नरकस्य भयात्स्वर्ग-लोभाद्धर्मं जनो भजेत् ॥ १ ॥

---

ज्ञातुस्तु संक्रामति कर्म सख्यौ रिपौ सुते वा यदि मृत्युकाले ।
सर्वस्य संक्रामति कर्म जन्तोः कथं न तद्वचिधनाविशेषात् ॥ ३७ ॥
स्वर्गोऽपि मिथ्या नरकोऽपि मिथ्या ब्रह्मैव जीवः सततादद्वितीयः ।
मिथ्या पुनर्जन्मविकल्पनेन जनान्कथं वञ्चयतीह भिक्षुः ॥ ३८ ॥
अध्यस्यमानस्य गुणादियोगो नाध्यासिनोति स्फुटमाह भिक्षुः ।
किमेव तत्कातरतां दधानः करोपि जीवस्य गतिं प्रवक्ति ॥ ३९ ॥
अज्ञस्य रम्भापरिरम्भलोभः कम्पस्तथा वैतरणीकथाभिः ।
लोभेन रम्भाधिगमो न तस्य कम्पेन वा वैतरणीविगाहः ॥ ४० ॥
मल्लोपजं घोरफणीति गृह्णाच्चुलूखलं स्यूमजनीति जानन् ।
अन्धः प्रकम्पेन मुदं वहेद्वा न भिद्यते तु स्रगुलूखलं वा ॥ ४१ ॥
शास्त्रेण वाच्यं परमार्थतत्त्वं भ्रमेण किं कीदृगिति प्रवक्तुम् ।
कस्यास्ति शक्तिः परमार्थ एको भ्रमास्तु नैके नियता न चैते ॥ ४२ ॥
नरे नरत्वं नरशास्त्रवाच्यं भ्रमेण तस्मिन्खरताश्वता वा ।
के के भ्रमाः कुत्र नरे भवन्ति कस्तत्प्रवक्तुं प्रयतेत विद्वान् ॥ ४३ ॥

स्वर्गादिवादिनामत्र मठमन्दिरभूमिषु ।
महापातकभूयस्त्वात्कल्पना सावकाशिनी ॥ २ ॥

सूत्राणि—कल्पना नाकनिरयादीनां सद्व्यतिकरात्काञ्चन-
पर्वतादिवत् ४-२-२३ । धर्मं भयार्थमज्ञानामिति केचित् ४-२-२४ ।
परस्वास्तेयमिव रज्जुसर्पसंनिकर्षात् ४-२-२५ ॥

नवमाधिकरणमारचयति-

भोगाशामोदकैस्तृप्त्या मूर्खाणां तु सुखं न वा ।
देवाङ्गनादिचिन्ताभिर्मोदस्तेषां विनिश्चितः ॥ १ ॥

---

वन्ध्यासुतं पुत्रवतीसुतं च विविच्य वेत्ता प्रथमे हतास्थः ।
कार्यं द्वितीयेन निजं करोति पशुः प्रमत्तोपरथा जनोसौ ॥ ४४ ॥
अनेकजीवत्वविरोधिनीं चेद्ब्रह्मैकतां स्थापयतीह भिक्षुः ।
कथं तदीया अनुयायिनोपि जीवं पुनर्जन्मजुषं वदन्ति ॥ ४५ ॥
अयं दरिद्रो भ्रमतोऽयमाढ्यः फलादभिन्नं वचसी इहैते ।
जीवो न जन्मान्तरवान्भ्रमेण तथेति तुल्ये वचने तथैव ॥ ४६ ॥
(अ. ८) तस्मादियं काञ्चनपर्वताभा प्रकल्पना स्वर्निरयादिकानाम् ।
ऊर्ध्वं सुमेराववलिम्बशैलं पुरे पयोधेर्वसुधोदरे वा ॥ ४७ ॥
धर्मं भयार्थं किल बालिशानां मत्येति तां केचन घोषयन्ति ।
आपातरम्यं सुफलं मृषोक्तिस्तत्त्व स्मरन्तः प्रतिरोचयन्ते ॥ ४८ ॥
कियच्चिरं रज्जुभुजङ्गमाद्वा बिभ्यत्तदभ्यर्णगतं न बालः ।
मुद्रादिकं स्प्रक्ष्यति सोऽस्पृशन्वा चोरो न किं स्याद्धृदयस्थचौर्यः ॥ ४९ ॥
किं चात्र दृष्टः सहभक्तिलक्ष्मा स्वर्गादिविश्वासपरीतपापी ।
पापं न तद्व्युदितेन यस्य न देवनाम्ना सकृदेव नश्येत् ॥ ५० ॥

यथा स्वर्गस्य चिन्ताभिः सुखं नरकचिन्तया ।
दुःखं तेषां तथा नातः स्वर्गस्यात्युपयोगिता ॥ २ ॥

सूत्राणि—वर्षशतेनाप्यतृप्तस्य ततोऽप्यल्पतरायुषो भोगाशेत्यन्ये ४–२–२६ । दुःखाशापि ४–२–२७ । पर्याप्तमायुर्ज्ञानवतः कार्यशेषस्यापरैरनुष्ठेयत्वात् ४–२–२८ । न तस्य लोकलिप्सा ४–२–२९ ॥

दशमाधिकरणमारचयति—

अत्युक्तिरेव स्वर्गादिस्तत्त्वं किञ्चिदिहास्ति वा ।
केचित् स्वर्गादयो लोकाः संभवन्त्येव वस्तुतः ॥ १ ॥

---

यः पापराशिः सुरमन्दिरेषु तीर्थेषु वा हन्त मठेषु वापि ।
स्वर्गादिविश्वासपराङ्मुखाणां वैज्ञानिकानां समितौ क्व तत्स्यात् ॥५१॥
गुरुं न धर्मस्य भयेन नारी स्वदूषणायोद्यतमाह किंचित् ।
प्रच्छाद्य धर्मस्य च कञ्चुकेन पापं नृपालादभयाश्चरन्ति ॥ ५२ ॥
स्वर्गाय बीभत्सनृशंसकर्मा यत्पातकं हन्त करोति कोलः ।
स्वर्गादिविश्वासपराङ्मुखस्तु स्वप्नेऽपि तत्पश्यति नैव धीरः ॥ ५३ ॥
( श्लो. ६ ) अतृप्यतो वर्षशतेन जन्तोर्भोगाभिलाषात्परलोकवादः ।
वैधव्यदग्धाखिलयौवनाया वेश्यात्वचिन्तेव सुरालयेषु ॥ ५४ ॥
यज्ञायकानां व्यभिचारचिन्ता मद्यस्य सेवा कलहश्च शश्वत् ।
जुगुप्सितोऽयं नरकात्सुघोरात्सुरालयो हन्त सुरालयोऽसौ ॥ ५५ ॥
सुरालये सौख्यलवानुशक्ताः स्मरन्ति नूनं निरयाच्च घोरान् ।
कुतोऽन्यथा स्वप्नसुरां विपाक्तां ध्यात्वा मुहुर्मोहमभी व्रजन्ति ॥ ५६ ॥

अभाव उत्क्रमस्यैव न दृष्टिः स्वर्गगामिनी ।
तस्मादत्युक्तिरेवैषाभिमता कविकल्पना ॥ २ ॥

सूत्रे–उपलभ्यमानसुखदुःखातिशयोक्तिस्तु ४–२–३० । नरकरूपकाङ्कुरा दृष्टव्यतिकरस्कन्धा सैषोत्प्रेक्षापल्लविता कविता ४–२–३१ ॥

एकादशाधिकरणमारचयति–

कर्मणः स्यात्परित्यागः शक्त्या सातत्यमेव वा ।
विरागिणां परित्यागः संभवेदत्र का क्षतिः ॥ १ ॥

---

ज्ञानामृतक्षालितचेतसां तु पर्याप्तमायुर्महतामिहत्यम् ।
नेच्छन्ति नाकाम्बरवारिजं ते त्रस्यन्ति नो वा निरयात्पिशाचात् ॥५७॥

यत्कार्यशेषं भुवि किंचिदेषां सुतेन शिष्येण परेण वास्य ।
संभाव्यते निर्वहणं न तैस्तु स्वर्नायकैर्वा निरयस्थितैर्वा ॥ ५८ ॥

(अ· १०) हर्षस्य वैशयाद्युपसक्तिजस्य पूतिव्रणादेश्च तदुद्भवस्य ।
अत्युक्तिरेषा परिकल्पना या सुराङ्गनावैतरणीप्रधाना ॥ ५९ ॥

विध्यर्थवादार्थ्यविवेकबीजा शब्दावलम्बाम्बुभरेण सिक्ता ।
तारायहादौ नररूपणां यत्तदङ्कुरा दृष्टसुखादिकस्य ॥ ६० ॥

अत्युक्तिभिः स्कन्धवती कवीनामुत्प्रेक्षया पल्लविता विशाला ।
अश्वत्थवर्धिष्टजनचित्तभूमौ चिराय हा हन्त विरूढमूला ॥ ६१ ॥

अनाग्रहाख्यत्सरुणा विवेक-शस्त्रेण तां तीव्रदृढेन कृत्ताम् ।
ज्वलत्परोक्षाहुतभुक्शिखासु भस्मीभवन्तीमवलोक्य तुष्टः ॥ ६२ ॥

तदङ्घ्रिवृद्ध्या परिशीर्यमाणां विज्ञानमारचयति विज्ञलोकः ।
विकासभाजा क्रमशो भवित्री संपन्महिष्ठा महितेन येन ॥ ६३ ॥

नासोन्मादसमोज्ञानां विरागो सौख्यमूलकः ।
तस्मात्तु कर्मसातत्यं यथाशक्ति हितं मतम् ॥ २ ॥

सूत्राणि-इह कर्मसातत्यम् ४-२-३२ । तद्भक्तिज्ञानमूलकं त्रिवर्गफलम् ४-२-३३ । सा जीवन्मुक्तिर्ममत्वविरहे ४-२-३४ । संन्यासस्तूर्ध्ववाहुवत् ४-२-३५ ॥

---

(अ० ११) स्वर्गादिचिन्तारहितस्तदित्थं विज्ञानवृद्ध्या जगतः शिवाय ।
ज्ञानेन भक्त्या च विशुद्धचित्तः सत्कर्म कुर्वीत सदैव साधुः ॥ ६४ ॥
यद्वस्तु यादृक् तत्फलं तथैव जानन्नाथो परमार्थभक्तः ।
अनारतं कर्मपरो लभेत धर्मार्थकामान्महनीयकीर्त्तिः ॥ ६५ ॥
अयं जनो नैव परस्तु कश्चिद्यः स्वार्थमिह प्रतिपद्य कर्मी ।
भूमानमानन्दमयं भ्रमेण निवेश्य सोऽत्येति बन्धमेति ॥ ६६ ॥
अस्यापि लोकस्य शरीरनाम्नः परस्य लोकस्य च भूमनाम्नः ।
अंशांशिभावं तु विदन्महात्मा सर्वस्य मुक्तः कुशलं करोति ॥ ६७ ॥
न कर्म सर्वात्मनि याति विश्रमं निरस्तकर्मा परमाणुरत्र नो ।
स्वकर्मसंन्यासमतः सुबुद्धयो न रोचयन्ते परमार्थवल्लभाः ॥ ६८ ॥
प्रमादवान्कर्म विहातुमोहते जनस्तु यो भूमनि सर्वकर्मणि ।
स ऊर्ध्ववाहोरिव बाहुरेककः पुरोध्वंशोयं तृणवद्विशुष्यति ॥ ६९ ॥
इदं हि धर्मार्थसुखस्य साधनं शरीरमाद्यं न ममत्वमत्र च ।
कथं तदेतत्सकलात्मनो धनं विनाशयेत्स्वैरसकर्मणा सुधीः ॥ ७० ॥

द्वादशाधिकरणमारचयति-

निर्वेदात्कायदुःखादि तपः कार्यं न वा बुधैः ।
कार्यं कण्टकशय्यादि तपो निर्वेदमाश्रितैः ॥ १ ॥
कलिदैवादिपैशाच-भ्रममूला विरागिता ।
तस्मात्कण्टकशय्यादि विकर्म परिवर्जयेत् ॥ २ ॥

सूत्राणि—शरीरमाद्यं त्रिवर्गसाधनं न च ममत्वं तत्रापि ४–२–३६ । कण्टकशयनादि कर्माभासः ४–२–३७ । युक्ताहार-

---

(श्र॰ १२) शरीरमेतत्सकलात्मनो धनं प्रवर्तयेत्सर्वहिते तदुत्तमः ।
तथा हि कायस्य धनं करो भवन्सदैव कायस्य हिताय चेष्टते ॥ ७१ ॥
न कर्म संन्यस्य परान्नसंप्रहैर्नचापि शार्दूलकलत्रतर्पणैः ।
न कण्टकसप्तशय्ययापि वा भ्रुकुंशभगहार्चनविभ्रमैर्न वा ॥ ७२ ॥
न चावताराभकदर्शनभ्रमैर्न भाष्मसत्त्वादिसमागमैर्हितैः ।
विकर्मभिर्वा न परिहिंनाशवेच्छरीरमेतत्सकलात्मनो धनम् ॥ ७३ ॥
सुयुक्तमाहारविहारमाचरन्सुयुक्तचेष्टः सकलेषु कर्मसु ।
भजन्सुयुक्तं शयनावबोधनं विवृद्धतेजा यदुराजयोगतः ॥ ७४ ॥
शरीरमेतत्सकलात्मनो धनं हितं नियोज्यन्सकलस्य सन्मतिः ।
विचिन्त्य विज्ञानमधूनि सर्वतः सरस्वतीसत्रमखण्डमाचरेत् ॥ ७५ ॥
उपचयवति शिल्पशास्त्रसत्रे सुखमिह जीवति सर्व एव लोकः ।
अथ मम निधनेपि सौख्यभाजो ननु मम बन्धव इत्युपैति तोषम् ॥ ७६ ॥
मूर्खस्तु नात्र परितुष्यति भोगजातैर्दारिद्र्यरोगनिलये निरयेवसीदन् ।
रम्भाङ्गसङ्गमसुभगसुनाशकाले दृष्टस्मतैर्दलति चेतसि रौरवाग्नेः॥७७॥

विहारतादि वासुदेवस्य ४–२–३८। कलिदैवावनतिलोकान्तर-
दिव्यशक्तिपिशाचादिप्रत्यया निर्वेदाभासहेतवः ४ २–३९ ॥
इति चतुर्थाध्याये द्वितीयाह्निकम् ।

---

कलिरयमिह का स्यादुन्नतिर्हन्त जन्तो-
रतिबलवति दैवे पौरुषं किं नु कुर्यात् ।
अवनतिरवराणां निश्चिता पूर्वजेभ्यो
भुवि भवदपि दुःखं शर्मयोमुत्र शश्वत् ॥ ७८ ॥
अतनिवत चिरवा दिव्यशक्त्या प्रबन्धा-
न्कइह मनुजशक्तिस्तादृशानद्य कुर्यात् ।
शिशुजनमिति वादैर्मोहयन्तः समन्ता-
द्रिपव इदमधन्यं भारतं नाशयन्ति ॥ ७९ ॥
इति चतुर्थाध्याये द्वितीयाह्निकम्

# पञ्चमाध्यायस्य प्रथमाह्निकम् ।

पञ्चमाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति—

चितौ निषेधसंशीतिविषयत्वं भवेन्न वा ।
सर्वत्र संशये सर्वाभावे वा संभवेदिदम् ॥ १ ॥
संशयो वा निषेधो वानुपलब्धौ न संभवेत् ।
उपलब्धिस्वरूपायां संभवो नैतयोश्चितौ ॥ २ ॥

सूत्राणि—ममत्वनाशश्चिदात्मभावात्मको ज्ञानम् । ५-१-१ । चिदक्षरात्मिका न निषेध्या न च संदिग्धा । ५-१-२ । निषेधसंदेहयोरपि चिदात्मकत्वात् ५-१-३ ॥

---

(अ० १) ममता तिरोभवति हन्त यदा सकलात्मता च समुदेति शिवा ।
चितिशक्तिरप्रतिहताथ तदा प्रथते प्रमादविगमादमला ॥ १ ॥
अखिलात्मिका चितिरियं सततं परिणामिनी च निजसाक्षितया ।
समवस्थिता च तदिमामबुधाः क्षणिकामथापरिणतिं च विदुः ॥२॥
परिणाममेव सुगता जगदुर्निजसाक्षिता यतिजनाभिमता ।
इदमन्धहस्तिनिभमंशपरि-ग्रहणं विमोहयति हन्त जनान् ॥ ३ ॥
चिदियं निषेधविषयो न भवेन्न च संशयस्य विषयः किल सा ।
उभयं चिदात्मकमिदं हि यतश्चिदतोऽक्षरात्मकतयाधिगता ॥४॥
यदि सर्वमस्ति चितिरस्ति तदानुपलब्धिरस्तिविषयो हि कथम् ।
अथ नास्ति सर्वमुपलब्धिरियं न चितिर्निषेधविषयस्तु ततः ॥ ५ ॥

द्वितीयाधिकरणमारचयति-

चिदात्मनः परिच्छेदः कथमप्यस्ति वा नवा।

ज्ञानं नैवापरिच्छिन्नं परिच्छेदः स्फुटस्ततः॥ १॥

उपलब्धिमयादन्यत्किं वा स्यादखिलात्मनः।

तस्मिन्नंशाः परिच्छिन्ना नास्य तु स्यात्परिच्छिदा॥ २॥

सूत्रे-न परिच्छिन्ना सर्वात्मनः परिच्छेतुरभावात् ५-१-४।

तस्यामेकस्यान्येन परिच्छेदो न तस्या अन्येनासंभवात् ५-१-५।

---

यदि संशयस्य विषयोऽप्यखिलोनुपलभ्य संशयमवैषि कथम्।

न चिदात्मनस्तदुपलब्धिमयात्प्रपलायितुं प्रभवतीह जनः॥ ६॥

विविधोपलब्धिविषयेऽपि चिदात्मनि नैककोंऽश इतरं स्पृशति।

असति त्वमेभिघटनेङ्गुलयश्चरणं शरीरिण इवैकतनोः॥ ७॥

अत एव भारतमुपावसतोनुपलभ्यमेव ननु सिद्धपुरम्।

न वह्निरवाप्यशकटादिगमाद्भवतीह यावदनयोर्घटनम्॥ ८॥

न च मानसेष्वपि सदा सकलं सुलभं स्मृतिः प्रभवतीह किल।

स्मृतिसंस्क्रियादिवशतोंऽशइह स्फुटमन्य एकमवकर्षति यत्॥ ९॥

(अ॰ २) अखिलात्मनोन्यदुपलब्धिमयात्परमस्ति न प्रमितिशून्यतया।

न परिच्छिदा भवति तेन चितेर्न परिच्छिनत्ति हि निजं किमपि॥१०॥

इह चिन्मयेंऽशमपरं तु परः परिविच्छिनत्ति सकलात्मनि यत्।

स ततो निजप्रमितिकः सकलं परिपश्यति स्वयमनन्यगतम्॥ ११॥

(अ॰ ३) समुदेति बुद्बुदतरङ्गनिभं सकलं स्वसाक्षिणि चिदम्बुनिधौ।

प्रविलीयते पुनरिहैव यतः सकलात्मता स्फुटममुष्य ततः॥ १२॥

तृतीयाधिकरणमारचयति—

जातु वैचित्र्यमात्रस्य ब्रह्मण्युपरमो नवा ।
निर्वैचित्र्यं ब्रह्म शुद्धं मुक्तौ प्राग्वापि स्थितः ॥ १ ॥
लुप्तेप्येकत्र वैचित्र्ये परेषामिह दर्शनात् ।
सृष्टेरनाद्यनन्तत्वाद्ब्रह्म वैचित्र्यवत्सदा ॥ २ ॥

सूत्राणि—स सर्वात्मा शरीरेन्द्रियविषयमनोदर्शो साक्षी ५-१-६ । तस्मिन्सर्वात्मसमुद्रे शरीराद्यमुदेति लीयते च बुद्बुदादिवत् ५-१-७ । तस्मिन्ननाद्यनन्तं पारमार्थिकं वैचित्र्यम् ५-१-८ । वैचित्र्यविशेषविलोपेप्यपरिच्छिन्नासंख्यवैचित्र्यान्तरवानयम् ५-१-९ । न हि बुद्बुदविशेषलोपादबुद्बुदो महार्णवः ५-१-१० । विशेषाणां कृत्स्नानामुदयस्य विलोपस्य वा यौगपद्याभावाद्वैचित्र्यात्यन्ताभावो नाममात्रम् ५-१-११ ॥

---

परिणामजातमिह यद्विविधं परमार्थसत्तदखिलं न मृषा ।
विषमत्वमेतदनवध्यनुपक्रमणावसानमखिलात्मतनो ॥ १३ ॥
समुदेतु वा विलयमेत्वपि वा परिणाम एक इह साचितनो ।
परिणाममात्रविलयस्तु न सोऽविरतोर्मिकः किल चिदम्बुनिधिः ॥१४॥
उदितिर्विलुप्तिरपि वा युगपत्परिणाममात्रविषयास्तु कथम् ।
परिणामशून्यपरमात्मकथा लयमेतु तेन किल भिक्षुकुले ॥ १५ ॥
न सुषुप्तिमानपि सुषुप्तिमयो भवति त्रयव्यतिकरस्तु विभुः ।
प्रभवाप्ययव्यतिकरेऽपि तथा भवशून्यता भवतु हन्त कथम् ॥ १६ ॥
विषमत्वमन्यदुररीकुरुतामपि वा न भिक्षुरिह चिज्जलधौ ।
प्रभवाप्ययव्यतिकराख्यमसौ विषमत्वमुत्कटमुदञ्चयति ॥ १७ ॥

चतुर्थाधिकरणमारचयति-

वैचित्र्यं मायिकं सर्वं पारमार्थिकमेव वा ।
विलोपान्मायिकं सर्वं नहि किञ्चिदनश्वरम् ॥ १ ॥
पारमार्थिकमेवेदं व्याघातरहितं यतः ।
विलोपाद्वस्त्वसन्नैव न मर्त्यत्वात्सुतो ह्यसन् ॥ २ ॥

सूत्रे-न मायिकमनिर्वाच्यं वैचित्र्यं भिक्षोरिवाद्वैतशुद्धि-
विलोपात् ५-१-१२ । विलोपादसदिति चेन्न व्याहतेस्तत्प्रयोज-
कत्वात् ५-१-१३ ॥

पञ्चमाधिकरणमारचयति-

मायानादिरनिर्वाच्या सतोर्व्यतिकरोथ वा ।
अस्त्वनादिरनिर्वाच्या भिक्षवोपि तथा विदुः ॥ १ ॥

---

(अ॰ ४) कथमस्तु मायिकमनिर्वचनोचितमङ्ग सर्वमुपलब्धमिदम् ।
न विचित्रभूयमखिलं जगतोपलपचपत्रपत उद्धतधीः ॥ १८ ॥
यदसच्च तद्भवति जातु न सद्विजहाति सत्त्वमिति कृष्णवचः ।
प्रतिभाति संगतमुशन्ति ततः शशशृङ्गसंनिभमसत्सुधियः ॥ १९ ॥
उपलब्धसत्त्वमिह जात्वपि यत्तदसत्कथं भवतु सत्त्वयुतम् ।
शशशृङ्गवन्ध्यतनुजादिपरं मतमत्र शब्दमयमीदृगसत् ॥ २० ॥
(अ० ५) अथ वन्ध्यभिक्षुवचनैकगतिः क्षमते न या किमपि निर्वचनम् ।
अयि मायया ननु चिदद्वयता-क्षतिदग्धयाऽलमुररीकृतया ॥ २१ ॥
सति कुत्रचिद्व्यतिकरस्य सतः प्रतिपत्तिरिष्टमिदमध्यसनम् ।
असतस्तु नैव सति नापि सतोऽसति जातुचित्क्षम इह प्रथितः ॥ २२ ॥

सतोर्व्यतिकरस्त्वेषा यस्या नामान्तरं भ्रमः ।
नासतो विद्यते भावो नाभावो विद्यते सतः ॥ २ ॥
सूत्राणि—तस्मान्नानादिर्माया न चानिर्वाच्या ५-१-१४ ॥
क्षणिकः प्रमादजः सतोर्व्यतिकरस्तु सा तथा च वक्ष्यति ५-१-१५।
नासतः सत्यध्यासो दृष्टः श्रुतो वा ५-१-१६ ॥
षष्ठाधिकरणमारचयति—

ज्ञानेपि कर्मसातत्यमुच्छेदः कर्मणोपि वा ।
ज्ञाने कर्म न संभाव्यं भवत्वेतदहन्तया ॥ १ ॥
ज्ञानेपि कर्मसातत्यं न्यायपूर्वन्तु तद्भवेत् ।
नाकर्म वासुदेवस्य जीवन्मुक्तस्य योगिनः ॥ २ ॥

---

न कदापि सद्यदि जगद्वदसि स्मृतिरप्यमुष्य कथमाविरभूत् ।
अनुभूतपूर्वविषयस्फुरणं विषये परत्र तव चाध्यसनम् ॥२३॥
असदेव मायिकमिदं निखिलं यदि वेन्द्रजालसदृशं वदसि ।
अपरोक्षकोसि नटपेटगतं सकलेन्द्रजालमवगच्छ शिशो ॥२४॥
(अ० ६) ज्ञतया तथैव किल विज्ञतया सततान्वितः सतु चिदम्बुनिधिः ।
अविरुद्धमेतदिह शक्तियुगं तपनस्य तापपरिवर्षणवत् ॥२५॥
अयमप्रमेयनिजबोधनिधिर्ज्ञतया ममत्वरहितो नृपवत् ।
अथ विज्ञ एव समतां वहते प्रमितात्मतां च भजते पितृवत् ॥२६॥
तनये निजे सममतो जनको न परस्य पुत्रमुपलालयति ।
अथ स प्रशास्तृपदवीं तु भजन्स्वसुते परत्र च समो भवति ॥२७॥
ज्ञतया तथैव समतां दधतः क्षतपक्षपातमखिलं चरतः ।
तनुरक्षणं भवति विज्ञतया सकलात्मनस्तनुमिमां विदतः ॥२८॥

सूत्राणि—ज्ञानविज्ञानशक्तिमांश्चिदात्मा ५–१-१७। उभयी शाश्वती ५–१–१८। विज्ञानशक्त्याबुद्धिकायां परिच्छिन्नात्मता पित्रादेरिव ५–१–१९। ज्ञानशक्त्याबुद्धिकायामपरिच्छिन्नस्वरूप-परिचयो ममतोच्छेदश्चाधिकरणिकस्येव ५–१–२०। स न्यायपर्यवसायी ५–१–२१। नाकर्म वासुदेवस्य ५–१–२२॥

सप्तमाधिकरणमारचयति-

निर्गुणः प्रकृतेर्भिन्न ईशः प्रकृतिरेव वा।
नियन्ता प्रकृतेः कश्चिन्निर्गुणः संभवत्यसौ॥ १॥

---

नृपतेः समस्तमवयन्नगराधिपतिर्यथा न सहतेनुचितम्।
इतरेतराक्रममसुष्य जने समतां वहंश्च परिपात्यखिलान्॥२९॥
सकलात्मनः सकलमेव विदन्स्वतनुं परांश्च परिपाति तथा।
इतया प्रबुध्य सुमतिर्जगतः शिवमाचरन्सततमुद्यमवान्॥३०॥
कृपणोलसस्तनुमिमां मम किं परिपोषयामि न पराच्चयैः।
अथ वा क्षिपामि न तरत्सुखं कृपयेति चिन्तयति हन्त कुधीः॥३१॥
स ममत्वदाघहृदयस्तु जडोन्त्यजवत्परित्यजत तं विबुधाः।
अनृतासुरस्य तनयैर्विकलं जगदीदृशैर्निरयपातहतैः॥३२॥
वसुदेवसूनुरपि कर्मपरित्यजनं विनिन्दति स योगिवरः॥
जनकादयोपि किल कर्मपरा दधति स्म सिद्धिमतुलामवनौ॥३३॥
(अ० ७) सुखमत्र भूमनि चिदम्बुनिधौ न परिच्छिदावति सुखं परमम्।
अनयेन जीवत इहासुलये गगनाङ्गनाप्रणयिनो न सुखम्॥३४॥

प्रकृतिर्नियतैवेयं विनियम्या न केनचित् ।
सर्वाकारेश्वराभिन्नासावित्येष विनिश्चयः ॥ २ ॥

सूत्राणि—स भूमा सुखं नाल्पे सुखमिति सनत्कुमारः ५-१-२३ । स परात्मा सर्वगुणः सर्वाकारः सर्वकामस्तथा च ब्राह्मणम् ५-१-२४ । न निर्गुणो निराकारो वा तस्यात्यन्ताभावरूपत्वात् ५-१-२५ । प्रकृतिः प्रमेयात्मिका सर्वत्र विशेषेषु ५-१-२६ । सामान्यतस्त्वप्रमेया चिदात्मिका ५-१-२७ ॥

अष्टमाधिकरणमारचयति—

भ्रमस्य तत्त्वज्ञानाद्वा लोपाद्वा मुक्तिरिष्यते ।
लोपान्मुक्तिर्न मुक्तौ स्यादनुबन्धो भ्रमस्य हि ॥ १ ॥

---

अखिलात्मकोऽखिलगुणो भगवानखिलाकृतिर्निखिलकामनिधिः ।
स सदात्मकः किल चिदम्बुनिधिः सुखमप्रमेयमिह सर्वमये ॥३५॥
न स निर्गुणो न च निराकृतिरित्यवधारयेः किमपि नास्ति तथा ।
यतिवक्त्रमङ्कुरनिवासरसा ह्यशिवा शिवेति सरणिस्तु गिराम् ॥३६॥
सपरिच्छिदा प्रकृतिरंशधिया निखिला तु न प्रमितिमर्हति सा ।
अपरिच्छिदा चितिमयी प्रकृतिर्बठरात्मजस्य निखिलात्मसमा ॥३७॥
पुरुषस्य या प्रकृतितस्तु भिदा कपिलप्रमादलहरी ननु सा ।
विविनक्ति हन्त पुरुषं प्रकृतेर्व्रततेर्मुनिर्विषमरत्वमिव ॥३८॥
पुरुषा हि बुद्बुदतरङ्गनिभाः प्रकृतौ चिदात्मनि विशेषमयाः ।
सकलात्मनः प्रकृतितः पुरुषान्कपिलो विवेक्ष्यति कथं मतिमान् ॥३९॥
(अ० ८) व्यतिभेद एव विषयस्य सतो विषयान्तरेण च सता विहतः ।
भ्रम उच्यते मरुमरीचिजल-स्फुटमल्लिकास्रगहिभोगनिभः ॥ ४० ॥

मुक्तिस्तत्त्वावबोधः स्याद्भ्रमलोपोऽप्रयोजकः ।

सदिग्भ्रमोऽपि विज्ञातभ्रमः पातं न ऋच्छति ॥ २ ॥

सूत्राणि–तत्त्वेनाज्ञातोऽव्याहतः सतोऽव्यतिकरो भ्रमः५-१-२८। सत्यसतस्तद्विपर्ययेण वाध्यासं भिक्षवः ५-१-२९ । भ्रमो ज्ञान-धर्मस्तत्त्वेन धर्मान्तरवज्ज्ञेयः ५-१-३० । तज्ज्ञानमप्रमादादज्ञानं च प्रमादात् ५-१-३१ । तस्य तत्त्वेन ज्ञानं मुक्तिः ५-१-३२ ॥ न नियतस्तद्विलोपो न चापेक्षितः ५-१-३३ । कुतो भ्रमः प्रमादेनेति न चोद्यं न हि दृष्टेनुपपन्नं नाम ५-१-३४ ॥

इति पञ्चमाध्याये प्रथमाह्निकम् ॥

---

सति नासतो न च सतोऽसति वा भ्रम उच्यते स्मरणमप्यसतः ।

नहि संभवत्यसति हेम्नि गिरावपि कस्य हेमगिरितर्कभवः ॥ ४१ ॥

भ्रमोऽपि धर्मश्चित एव तत्त्वतोऽवगम्य धर्मान्तरवत्तमुत्तमाः ।

प्रमाददोषं विनिरस्य ये स्थिताः सदेहमुक्तिं दधते सदेह ते ॥ ४२ ।

न तत्त्वमेतस्य विदन्ति ये पुनः प्रतीक्षमाणा मतमुक्तिमायतीम् ।

अवस्थितास्ते निरये तमोमये चिरं विषीदन्ति गजा इवावटे ॥ ४३ ॥

भ्रमस्य लोपो नियतो न नाप्यसावपेक्षितस्तत्त्वविदोऽपि मुक्तये ।

भ्रमो भ्रमत्वेन विनिश्चितः परं ददाति निःश्रेयसमत्र निश्चितम् ॥ ४४॥

जनोऽनुबध्नत्यपि दिग्भ्रमे यथा दिशोऽनुमिन्वन्रविबिम्बदर्शनात् ।

न कार्यहानिं भजते तथा गतिर्भ्रमस्य सर्वस्य मता मनीषिणाम् ॥४५॥

कुत उदित इह भ्रमश्चिदव्धौ ननु सकलात्मनि भूम्नि साक्षिरूपे ।

अनुचितमिति नानुयोज्यमेतत्स्फुटमुपलब्धिरबाधितोपपत्तिः ॥ ४६ ॥

इति पञ्चमाध्याये प्रथमाह्निकम् ।

# पञ्चमाध्याये द्वितीयाह्निकम् ।

पञ्चमाध्याये द्वितीयाह्निके प्रथमाधिकरणमारचयति-

मतभेदेषु सर्वेषु श्रद्धा कार्या न वा पुनः ।
सर्वेषां मतभेदानामङ्गीकार्यात्र सत्यता ॥ १ ॥
वस्तुन्येकविधेनेक-मतानां स्याश्च सत्यता ।
मायानिःश्रेण्यतीतोस्माद्ग्राह्यः सिद्धान्त एककः ॥ २ ॥

सूत्राणि-सा माया निःश्रेणित्रयवती ममताहन्तादिपर्याया ५-२-१ । उपनिषत्सिद्धान्तस्तामतीतः ५-२-२ । मतभेदा निःश्रेणिषु ५-२-३ । प्रमातृप्रमेयपृथक्कारः प्रथमा ५-२-४ ।

---

(श्र॰१) भ्रमं ममत्वादिविशेषरूपिणं वदन्ति मायेति चिरनसूरयः ।
विदुस्त्रिनिःश्रेणिमिमाममायिकं स्थितं विलङ्घ्योपनिषन्मतं तथा॥१॥
भ्रमस्य निःश्रेणिषु हन्त वर्त्तयत्क्षतं मतानामितरेतरद्विषाम् ।
चिराय यद्वादिभिराकुलीकृते ननाश विज्ञानमथाग्नि भारते ॥ २ ॥
अपौरुषेयं निजधर्मपुस्तकं जनानमुक्तीन्प्रतिभूरूपां विना ।
शरीरजीवादिषु पञ्जराण्डज-स्थितिं जगद्विर्मितिमादिशिल्पिना ॥ ३ ॥
अधीश्वरत्वे पुरुषस्य कस्यचिद्रहस्यतां तत्त्वधियश्च मत्युताम् ।
जनेषु निर्घोष्य गतत्रपा श्रमी चरन्ति भूमौ मतवादवल्लभाः ॥ ४ ॥
प्रमादनाम्नो महिषस्य यत्पदं हठेन देशे पतितं सुदारुणम् ।
तदेव देवोयमिति त्रपोज्झिताः समर्चयन्तः प्रचरन्ति दाम्भिकाः ॥५॥

द्वयस्यान्यतरस्य वा निष्पेषो द्वितीया ५-२-५। निष्पिष्य कल्पितानां तत्तत्पुञ्जीकारे पुञ्जविशेषे चिदन्तर्भावस्तृतीया ५-२-६ ॥

द्वितीयाधिकरणमारचयति-

पुरुषः प्रकृतिश्चेति द्वैतं सत्यं मृषाथवा ।
सत्यं स्यादुपलब्धं हि सर्वैर्द्वैतमितीदृशम् ॥ १ ॥
न तत्संभाव्यते सत्यं द्वैतं नायुतसिद्धयोः ।
न द्वैतमस्मान्नैकं वा मिथ्यैकं सद्ब्रह्मनाम तत् ॥ २ ॥

सूत्राणि-जातिव्यक्तिवत्प्रकृतिपुरुषभेदं कापिलाः५-२-७। न पुरुषो भूतान्येवेति चार्वाकाः ५-२-८। ब्रह्म निर्गुणं सत्यं जगन्मिथ्येति भिक्षवः ५-२-९। एते प्रथमायाम् ५-२-१० ॥

---

प्रमादपाप्मानमुदस्य विघ्नतां स्वबन्धुतायाः सततं दिदृक्षवः ।
सरस्वतीस्रोतसि निर्मले पुनर्वगाढुमिच्छन्ति महौजसः परे ॥ ६ ॥
स्वधर्मतातं विटदाम्भिकेषु हा भुकुंसभण्डेषु च भक्तिमातरम् ।
समर्प्य पोटासु च शास्त्रसोदरं कथं न मुग्धो निरये पतिष्यति ॥ ७ ॥
शनैः प्रमातुः सकलात्मनोपि या प्रमेयतः शब्दवशात्पृथक्क्रिया ।
भ्रमस्य मायेति सतस्य सादिमावतारनिःश्रेणिरियं प्रकीर्त्तिता ॥ ८ ॥
पृथक्कृतादंशयुगादिति स्फुटं विशीर्यतः कर्कशतर्कचक्रके ।
द्वयस्य किंवान्यतरस्य संमता प्रसह्य निष्पेषणमेव चापरा ॥ ९ ॥
हठाद्विनिष्पिष्य च तार्किकैः कण-चणादिभिः पुञ्जविशेषतां पुनः ।
अवापितैस्तोषमुपेत्य कुर्वाचचिवेशनं भूम्न इहान्तिमा मता ॥ १० ॥
( प्र० २ ) विमोहितः शब्दवशेन तार्किकोभ्युपैति जातिं पृथगर्थतो यथा ।
तथा प्रमातृप्रकृतेस्तु वस्तुतो विविक्तभावानवयन्ति कापिलाः ॥११॥

तृतीयाधिकरणमारचयति-

अणुविज्ञानमुख्याः स्युः स्वतन्त्राः कणराशयः ।
अनुबद्धाथवैका स्यात्प्रकृतिः कणशालिनी ॥ १ ॥
परम्पराः कणानां स्युः स्वतन्त्रास्तत्र का क्षतिः ।
स्फुटोपलब्धः संबन्धस्तस्मात्प्रकृतिरेकिका ॥ २ ॥

सूत्राणि-अनेके जीवास्तत्तत्परिमाणा आर्हतानाम् ५-२-११। क्षणिकानि विज्ञानानि सौगतानाम् ५-२-१२ । अनेकेणवोनेके चात्मानः काणादानाम् ५-२-१३ । एते द्वितायायाम् ५-२-१४ ॥

चतुर्थाधिकरणमारचयति-

सर्वात्मनोवतारादि-परिच्छेदो भवेन्न वा ।
अमुष्य सर्वशक्तित्वात्स्यात्कथं न परिच्छिदा ॥ १ ॥

---

प्रसह्य चैवं कपिलानुसारिभिः प्रवर्त्तितं द्वैतमलं दधत्यलम् ।
न पुंसि चार्वाकमतल्लिका रता दधाति भूतेषु च भक्तिमुत्तमाम् ॥१२॥
पुमांसमेकं प्रवदन्ति भिक्षवो जगन्मृषेत्यभ्युपयन्ति च स्फुटम् ।
इति त्रयस्ते प्रथमामुपासते भ्रमस्य निःश्रेणिमवारितभ्रमाः ॥ १३ ॥
(अ. ३) विदन्ति तत्तत्परिमाणमार्हता इतास्रवा जीवमनेकमूर्जितम् ।
समाश्रयन्ति क्षणिकांश्च सौगतः गताधयो वित्तिलवान्प्रवाहिणः॥१४॥
अणूननेकानथ चात्मनो बहूनुपासते काणभुजा अजानिह ।
त्रयो द्वितीयामिति वादिनः श्रिता भ्रमस्य निःश्रेणिममन्दविभ्रमाः॥१५॥
(अ. ४) अथोर्ध्वलोकेषु वदन्त ईश्वरं वहन्ति मोदं किल देववल्लभाः ।
तमेव मत्स्यादिविशेषरूपिणं विदुस्तु भक्ता अवतारवादिनः ॥ १६ ॥

सकलस्य शरीरस्य नासारूपेण संस्थितिः ।

असंभाव्या यथा तद्वत्परिच्छेदोऽखिलात्मनः ॥ २ ॥

सूत्राणि-ऊर्ध्वेंष्वर्धजरतीयानि दैवाः ५-२-१५ । जीवशरीरेष्वित्यन्ये ५-२-१६ । पिशाचवदितस्तत इत्यपरे ५-२-१७। एते तृतीयायां सा भ्रमस्य परा काष्ठा ५-२-१८ ॥

पञ्चमाधिकरणमारचयति-

नाशक्रमाद्विशेषाणां सर्वोच्छेदो भवेन्न वा ।

क्रमशः सर्वनाशे स्यादुच्छेदः का विकल्पना ॥ १ ॥

नाशे विशेषस्यैकस्य परेषां समवस्थितिः ।

उद्भवश्चेत्यसंभाव्या सर्वोच्छेदकथा ततः ॥ २ ॥

सूत्राणि-मणिमयपाञ्चालिकावत्तु सर्वात्मा बिम्बः ५-२-१६ । मनांसि मणयस्तत्र ५-२-२० । मणिविशेषेषु तत्प्रतिबिम्बा मणि-

---

पिशाचवत्संविचरन्नितस्ततो भुकुंसवर्ग्योयमिति त्वथेतरे ।

स्थितास्तृतीयामिति वादिनस्त्वयो भ्रमस्य निःश्रेणिमिहोल्वणभ्रमाः ॥१७॥

भ्रमस्य काष्ठा चरमा प्रकीर्तिता वक्रव्रतानां परमाधिदेवता ।

विकर्मणां या सरमा शुनामियं हतेषु देशेष्वरमा प्रमादिषु ॥ १८ ॥

(अ॰ ५) स एव भूमा मणिसालभञ्जिका-निभस्तु बिम्बः सकलात्मकः शिवः ।

मनांसि विद्वन्मणयोऽत्र चिन्मये विशिष्य बिम्बग्रहणाय चेशते ॥१९॥

मनोविशेषे प्रतिबिम्बितोंशतः स एव भूमा ननु जीवसंज्ञकः ।

यथेह यादृश्यनुबिम्बितो मणौ तथैव बिम्बः प्रतिभाति निश्चितम्॥२०॥

भेदभिन्ना जीवविशेषाः ५–२–२१ । मणेराकारोपमर्दात्प्रतिबिम्ब-विशेषस्य नाशो न बिम्बस्य न वा कृत्स्नस्य मणिसमूहस्य प्रति-बिम्बसमूहस्य वा ॥ ५–२–२२ ॥

षष्ठाधिकरणमारचयति–

भूमांशवेद्योन्याहग्वा, वेद्यः स्यादेष सर्वथा ।
भक्तानां हि प्रकाशोसाववेद्यो वातिसौक्ष्म्यतः ॥ १ ॥
अंशवेद्यः सदा भूमा परिच्छेद्यो न कस्यचित् ।
ज्ञानं यथा यथांशानामविद्यापगमस्तथा ॥ २ ॥

सूत्राणि–तदद्वैतं शुद्धं वैश्वानरीयम् ५–२–२३ । शरीरवदाकाशवत्समुद्रवच्चेदम् ५–२–२४ । न कात्स्न्येंन विदितं नात्यन्तमविदितम् ५–२–२५ । अज्ञातं नराद्याकारवादिनां निराकार-

---

मणेरिहैकस्य तु नाप्यये विभुः प्रयाति बिम्बो विलयं कथंचन ।
न चाप्यशेषप्रतिबिम्बविप्लवो विलीयते तु प्रतिबिम्ब एककः ॥ २० ॥
( अ॰ ६) तदित्यमायाशबलत्वदूषितं विशुद्धमद्वैतमुदारधीर्जगौ ।
अनुस्मरन्नर्जुनसारथेर्गिरः स वल्लभः सत्यवतीसुतानुगः ॥ २२ ॥
यथा कराङ्घ्र्यादि शरीरसंगतं तडित्प्रभाद्यम्बरसंभृतं यथा ।
तरङ्गफेनादि यथाब्धिमाश्रितं तथैव विश्वं सकलात्मनि स्थितम् ॥२३॥
चिदात्मतत्त्वं विदितं न सर्वथा जनस्य किंचाविदितं न सर्वथा ।
यथा यथास्वांशमवैति मानवस्तथा तथा विज्ञतरत्वमृच्छति । २४ ॥
रसप्रभातापतडित्स्वनादयोखिलात्मनोंशा बहवः सुविश्रुताः ।
इहैकमेकं परिगृह्य सन्मतिः समस्तमायुः सफलीकरोत्यलम् ॥ २५ ॥

वादिनां च ५-२-२६ । विदितं वामदेवजनकयाज्ञवल्क्यवासुदे-
वादीनां जीवन्मुक्तानाम् ५-२-२७ ॥

सप्तमाधिकरणमारचयति-

आत्मानात्मविदोरेका गतिर्वा द्विविधा मता ।
कृमिभस्मविडन्तत्वादेका स्यादुभयोर्गतिः ॥ १ ॥

---

निजाल्ललाटादथवोर्ध्वलोकतस्त्रिवारमोङ्कारमुदीर्य विस्फुरत् ।
तडित्समं ज्योतिरवेक्षसे सखे शरस्य लक्ष्यं प्रणवस्य यद्विदुः ॥ २६ ॥
विलिह्य वा स्वामिपतद्गृहोद्गतां पवित्रलालां परिपूतचेतनः ।
विलोकयेर्भक्तशिरःसमुद्गतं महः परब्रह्मसमानमद्भुतम् ॥ २७ ॥
रहोनिकुञ्जे शमिनामथ त्वमन्प्रविश्य वा तीर्थविहारगह्वरे ।
प्रजाप्रदात्रीर्विधवाननेष्वपि प्रपश्यसि ब्रह्मपिशाचदेवताः ॥ २८ ॥
अथापि माञ्जिष्ठमयं शरीरके मुहुर्वहन्चार्त्तवलक्ष्म निर्मलम् ।
न रामसत्त्वं न भवत्स्वरूपिणं पुनर्धरायामवतारयिष्यसि ॥ २६ ॥
घृतं सखे ते सरयूः प्रदास्यति प्रजानिलाशस्य नचान्नमिच्छति ।
विपच्चरस्यासुनिरोधरीतिभिः किमङ्ग ते वाप्यतडिद्रथादिभिः ॥ ३० ॥
किमङ्ग विज्ञानमिदं निषेवसे विमुञ्च नास्तिक्यमिदं किलाफलम् ।
क्रियच्चिराद्भावनयैव शिक्षये समस्तसिद्ध्यागमनस्य ते कलाम् ॥ ३१ ॥
कयापि वैधेयजनस्तु पेटया भुकुंडभण्डेन विटैस्तथापरैः ।
इतीव मध्वाज्यमयैर्विमोहितो वचोभिरज्ञानतमःसु मज्जति ॥ ३२ ॥
स एष भूमा सकलात्मकोंशकैरसप्रभातापतडित्स्वनादिभिः ।
यथाकथञ्चिद्विदितः स्फुरद्धियामनर्घ्यविज्ञानभृतां महात्मनाम् ॥ ३३ ॥

प्रत्यक्षाज्ञाननिरये सदानात्मविदः स्थितिः ।

सत्यज्ञानात्मके नाके सदैवात्मविदः स्थितिः ॥ २ ॥

सूत्राणि–संनिकृष्टतमं प्रियतमं ज्ञाततममपि तं प्रमादिनो विप्रकृष्टमिवाप्रियमिवाज्ञेयमिवोपेक्षन्ते ५–२–२८ । त आत्मघ्ना असुर्येऽन्धे तमस्यवतिष्ठन्ते ५–२–२९ । तरति शोकमात्मविद्भयं च प्राप्नोति ५–२–३० । असतः सन्मृत्योरमृतं तमसो ज्योतिर्गच्छति ५–२–३१ ॥

इति पञ्चमाध्याये द्वितीयाह्निकम् ॥

---

यदीयतत्त्वग्रहणात्कुटुम्बिनः अमेया सिद्धिं जनकादयः पुरा ।

अकर्मसंन्यासपरा ययुः परां परार्ध्यविज्ञानयुता मनीषिणः ॥ ३४ ॥

(अ० ७) वदन्त एतं नरवानराकृतिं निराकृतिं वा न विदन्ति तत्त्वतः ।

उपेक्षमाणाश्च तमात्मघातिनः पतन्त्यसुर्ये निरये तमोमये ॥ ३५ ॥

चिदात्मतत्त्वं त्वखिलात्मकं विदन्विशिष्य नान्विष्यति कुत्रचित्कृती ।

तदंशविज्ञानमुखचक्षप्रभा-तडित्स्वनोष्मादि च यः परीक्षते ॥ ३६ ॥

तरति शोकमुदस्य भयान्यलं सदसतोमृतमप्यथ मृत्युतः ।

स भजते तमसश्च परं महो व्रजति मङ्गलमङ्ग लसन्मतिः ॥ ३७ ॥

इति पञ्चमाध्याये द्वितीयाह्निकम् ।



# षष्ठाध्याये प्रथमाह्निकम् ।

षष्ठाध्याये प्रथमाह्निके प्रथमाधिकरणमारचयति–

गुणाश्रयोऽतिरिक्तोऽस्ति न वा कश्चिद्गुणोत्करात् ।
द्रव्योपलब्धिः प्रत्यक्षा तस्मादस्ति गुणाश्रयः ॥ १ ॥
गुणानामाश्रयः कश्चिन्नातिरिक्तो गुणोत्करात् ।
स्वाश्रयत्वं स्थितं तस्माद्गुणानां वसुधादिवत् ॥ २ ॥

सूत्राणि–न द्रव्यं गुणेभ्यो भिद्यते ६–१–१ । गुणसमुदाये द्रव्यत्वकल्पना सेनावनादिवत् ६–१–२ । आधारो द्रव्यं चेत्तदाधारान्वेषणादनवस्था शेषकूर्मादिवत् ६–१–३ । स्वाधारो गुणसमूहस्तु भूम्यादिवत् ॥ ६–१–४ ॥

---

(अ॰ १) न सर्ववित्सततमकुण्ठशक्तिकः पुरापि वा प्रभवति कश्चिदद्य वा ।
प्रमादिता न खलु न सर्वगा स्फुटं विभाव्यते भ्रममदमत्सरादिजा ॥१॥
उदग्रधीस्त्वदिति चिरन्नविद्यया विशोधयेद्भ्रमनिकरं पुरातनम् ।
अयं कृती कृतमिव पूर्वजैर्निजैस्तदोयया धनबलबुद्धिसंपदा ॥ २ ॥
न विद्यया क्वचिदपि पूर्णताप्यते पुराद्य वेत्यवगमनं सुविज्ञता ।
पुरातना दधुरिह पूर्णविद्यतामिमां मतिं स्फुटमवगच्छ मूर्खताम् ॥३॥
अहंगतं किमपि यदेव दृश्यते चिरन्तनेष्ववविदितमेवमेव वा ।
विशोधनैरथ परिपूरणैस्तयोर्मुदं परां वहति सुधीरकातरः ॥ ॥ ४ ॥
न पूर्वजादवरजनः प्रशस्यधीर्भ्रमो भवेद्वपिपु न दिव्यशक्तिपु ।
स्तुवन्नित्थमिति कुमतिस्त्वविद्यया विनाशयत्यनयभरेण बन्धुताम् ॥५॥
प्रमादितां सकलजनस्य शंसता परेण तु प्रमदभरेण नृत्यता ।
युगान्तरे किल विदुषां भविष्यतां कृतेऽखिलं विनिदधताद्य शस्यते ॥६॥

द्वितीयाधिकरणमारचयति-

पृथगर्था इमे द्रव्यगुणाद्याः कल्पितास्तु वा ।
पृथगर्था इमे नूनमुपलम्भो हि तादृशः ॥ १ ॥
एकोऽर्थः शब्दमात्रेण द्रव्यत्वादिविकल्पभूः ।
स्वतन्त्रावस्थितिर्नैषामुपलब्धा पृथक् पृथक् ॥ २ ॥

---

अपश्यतां पितृषु समस्तवेदितामतिष्ठतामपि च सुतपतीक्षया ।
पदे पदे निखिलपरीक्षिणां महान्समुद्यमोद्य तु परमार्थदर्शिनाम् ॥७॥
प्रवर्त्तयन्सरणिमिमां परीक्षया विशोधयन्य इह कृतस्थितोऽभ्रमान् ।
नवं नवं प्रणयति शास्त्रमात्मवान्प्रयात्यसौ पितृऋणनिष्कृतिं कृती॥८॥
चिरन्तना निशितधियोप्यसाधना दधुश्चिरादपि किल नातिविज्ञताम् ।
महाढ्यतां वहतु महोद्यमोऽपि सन्वणिग्जनो ननु कथमल्पभाण्डकः॥९॥
चिरन्तनैरुपचितमद्य तु क्रमाद्वहन्सुधीर्महदिह विज्ञताधनम् ।
निरस्य तद्भ्रमनिकरं परीक्षया महीयसीः प्रथयति शास्त्रपद्धतीः ॥१०॥
न भिद्यते गुणनिकराद्गुणी स्फुटं निराश्रयो गुणनिकरो व्यवस्थितः ।
असंगता गुणगुणिभावकल्पनातिरिच्यते गुणनिकराद्गुणीति कः ॥११॥
न भिद्यते वनमवनीरुहां चयाद्यनीकिनी न च ननु सैनिकोत्करात् ।
न भिद्यते गुणनिकरात्तथा गुणी गुणाश्रयो वचनविकल्पमात्रजः ॥१२॥
गुणाश्रयो यदि परिकल्प्यतेऽथवा तदाश्रयः पुनरपि किं न कल्प्यते ।
अथाश्रयः स किल निराश्रयस्तदा गुणोत्करो न कथमनाश्रयस्तव ॥१३॥
गुणक्रियाश्रयपरिकल्पना क्षितेरिवोरगप्रभृतिगतत्त्वतर्कणा ।
यथा पुनर्धरणिरियं निजाश्रया तथा स्फुटं गुणनिकरो निजाश्रयः॥१४॥

सूत्राणि—कर्मगुणविशेषः ६-१-५ । सामान्यं नाममात्रं नातिरिक्तं विशेषेभ्यः ६-१-६ । एतेन विशेषः प्रयुक्तः ६-१-७ । अयुतसिद्धयोरभेदात्समवायोऽपि तथा ६-१-८ ॥

तृतीयाधिकरणमारचयति—

अभावः कश्चिदर्थोऽस्ति नार्थोयमथवा पृथक् ।
व्यपदेशाद्घटो नास्तीत्यादेरर्थोऽस्त्यसौ पृथक् ॥ १ ॥
प्रतियोगिस्वरूपत्वान्नाभावोऽर्थः पृथङ्मतः ।
तद्भिन्नं सर्वमस्तीति तदभावार्थ ईरितः ॥ २ ॥

---

(श्र० २) गुणः क्रियेत्यनतिशयात्भिदा मता द्वयं यतः परिणतिरेव नेतरत् ।
कुतार्किका निजगदुरर्थमद्वयं गुणक्रियाधिकरणजातिनामभिः ॥ १५ ॥
इहान्विता बहुषु न जातिरेकिका गुणान्समान्कलयसि जातिरित्यलम् ।
समापि सा न हि शिशुता शिशुद्वये पयोम्बुनोर्न मधुरिमा स एव वा ॥१६॥
न जातिरस्त्यतिशयिनी विशेषता न वा विशेष इह स तां ह्यपेक्षते ।
प्रकल्प्य तां तदनु विशेषवादिनो विडम्बनां कणभुगनुश्रिता ययुः ॥१७॥
कुतार्किकैः पृथगिति शब्दमात्रतो गुणक्रियाधिकरणजातिनामभिः ।
उदीरितेष्वतुलमहिम्न्यथाद्वये न वास्तवो भवति भिदेद्दृशी यतः ॥१८॥
अतः कथं गुणगुणिकारकक्रियादियोजकः किल समवाय इष्यताम् ।
अयेष्यतेस्य च ननु योजकं परं प्रपद्यसे कथमिति बादरायणः ॥ १९ ॥
(श्र०३) विमध्यहच हि सकलात्मना यतो न सत्तया किल सकलात्मना स्फुटम् ।
असत्त्वमित्यपरमिदं न भेदतोऽतिरिच्यते विषययुगादयं न च ॥ २० ॥
चिरन्तनः कणभुगपि स्वशब्दतो न सप्तमं सुमतिरिहार्थमुक्तवान् ।
असच वा न च सदिदं यदद्वयं विकल्पयन्पठति भवात्मकं स तत् ॥२१॥

सूत्राणि—अभावो भेदः स प्रतियोगिस्वरूपः ६-१-९ । अत्यन्ताभावाद्यं तार्किककल्पना ६-१-१० । अतएव कणभुजो-ऽभावाभावः ६-१-११ ॥

चतुर्थाधिकरणमारचयति—

तत्त्वानां पञ्चसंख्यत्वं प्रत्नोक्तं संगतं न वा ।
रूपादिगुणयोगेन पञ्चसंख्यैव संगता ॥ १ ॥
घटितत्वाज्जलादीनां पञ्चसंख्या त्वसंगता ।
आग्नेयादीनि तत्त्वानि वियद्वा तत्त्वमेककम् ॥ २ ॥

सूत्रे—पृथिव्यादीन्यतत्त्वानि तत्त्वान्तरघटितत्वात् ६-१-१२ आकाशः शब्दगुणो निर्वायौ तदभावात् ६-१-१३ ॥

पञ्चमाधिकरणमारचयति—

दिक्कालयोरिहार्थत्व पृथगस्ति न वा पुनः ।
परत्वादिधियां हेतू स्यातामर्थाविमौ पृथक् ॥ १ ॥

---

(४) क्षितिर्जलं शुचिरनिलस्तथा वियच्चिरन्तना विदुरिति तत्त्वपञ्चकम् ।
शुचिर्गुणो वियति विवर्त्ततेखिलं त्रयं परं घटितमनेकतत्त्वकम् ॥ २२ ॥
तडिन्मयं वियदिति तत्त्वमेककं विवर्त्तते स्वयमिह तत्तदात्मना ।
विवर्त्तने यदघटितं विभाव्यते वदन्ति तत्त्वमिति बुधास्तदेव तु ॥ २३ ॥
अवायुके वियति न यन्त्रयोगतः स्वनः समुद्भवति ततो न संगता ।
स्वनस्य सा वियदवलम्बकल्पना स्वनः स्फुटं मरुदवलम्ब इष्यते ॥ २४ ॥
प्रभावनीमियमनिलाध्वनः परादपराद्दिकात्मततमुपैति न स्वनः ।
प्रभां [illegible] रिङ्गयां स्वनं पुनर्विदुरनिलोर्मिकात्मकम् ॥ २५ ॥

सामान्यवद्भूम्न्येकस्मिन्कल्पना दिगनेहसोः ।
अतो न पृथगर्थत्वं तयोरिह समञ्जसम् ॥ २ ॥

सूत्रम्—दिक्कालौ सामान्यवत् ६-१-१४ ॥

षष्ठाधिकरणमारचयति—

लयसृष्ट्यादयेऽदृष्टं स्वीकर्त्तव्यमथो न वा ।
अज्ञातहेतुकार्यार्थं कर्त्तव्याऽदृष्टकल्पना ॥ १ ॥
सृष्टेरनाद्यनन्तत्वाज्जीवस्यापुनरुद्भवात् ।
अदृष्टकल्पना व्यर्था सर्वं दृश्यात्प्रसिध्यति ॥ २ ॥

सूत्रम्—नादृष्टं व्याघातात् ६-१-१५ ॥

सप्तमाधिकरणमारचयति—

एक आत्माथवानेके परजीवादिनामकाः ।
आत्मानो बहवो दृष्टास्तस्मान्नैक्यमिहात्मनः ॥ १ ॥

---

(अ॰ ५) न जातिरस्त्यधिकरणाद्यथा पृथग्दिशस्तथा न पृथगनेहसा समम् ।
इहाद्वयेऽधिकरणभूम्नि कल्पना गुणादिवत्किन्न दिगनेहसोरपि ॥ २६ ॥

(अ॰ ६) अदृष्टमित्युदितमपूर्वमेव वा पुरातनं सुकृतमथापि दुष्कृतम् ।
तदुद्भवा फलजननी च संक्रियाथवा स्फुटं मतमसमञ्जसं तु तत् ॥२
न चाप्ययो भवति नचोद्भवस्तथाखिलस्य यज्जगत इहैकदा यतः ।
अतोभवत्पृथगणवो न जातुचिन्न शिल्पिना स्वयमथवापि योजिताः॥२
असंगता प्रभवकथाखिलात्मनो न चापरं जनुरपि सिध्यति स्फुटम् ।
निरर्थया तदलमदृष्टवार्त्तया लयात्परं जगदुदयाय याश्रिता ॥ २९ ॥

जीवा बुद्बुदवद्यस्मात्तस्मादात्मैक एव तु ।
दीर्घतादि घने यद्वत्तद्भेदा इह स्थिताः ॥ २ ॥

सूत्रे—आत्मैको जीवस्य शरीरायुतसिद्धत्वात् ६–१–१६ ।
स्मिन्द्रव्यत्वादि घन इवास्तित्वादि ६–१–१७ ॥

अष्टमाधिकरणमारचयति—

मनस्तनोः पृथङ्नो वा पृथगस्त्येव तार्किकैः ।
अणु द्रव्यं हि तत्स्पष्टं प्रतिपन्नं मनीषिभिः ॥ १ ॥
पृथङ्मस्तिष्कनाड्यादेर्मनो नास्तीह किञ्चन ।
मनस्तन्वादितर्को हि प्रकृतिप्रत्ययादिवत् ॥ २ ॥

सूत्रम्—मनो जीववत् ६–१–१८ ॥

नवमाधिकरणमारचयति—

अप्रत्यक्षे वियत्तत्त्वेणुभिर्जगदिदं न वा ।
सादृष्टैरणुभिः सर्वमप्रत्यक्षेम्बरे भवेत् ॥ १ ॥

---

(अ. ७ ) सनातनो विभुरखिलात्मकः सदा विचित्रतां दधदयमेक आत्मनि ।
इहान्वितास्तनुमनु नाशजन्मिनो न शाश्वताः स्वयमथ जीवबुद्बुदाः॥३०
इहाद्वये घन इव सत्त्वदीर्घता गभीरतादिकमखिलं विलोक्यते ।
गुणक्रियाधिकरणजातिवादिनां विशेष इत्यवधृतिरात्मवेदिनः ॥३१।
(अ. ८) यथा तनोः पृथगिह जीव इत्ययं न कश्चनैवमपि मनो न वा पृथक्
तनूमिमां व्यपदिदिशुः कुतार्किका विचक्षुषो द्विपमिव तत्तदात्मना ।३२
(अ. ९ ) नचाणवो वियति तरन्त उद्भटा अदृष्टतो दधत इतस्ततो गतिम्
क्रियच्चिरं प्रलयमथ क्रमात्ततः प्रयुञ्जते द्व्यणुकमुखं महज्जगत् ॥ ३३ ॥
न संभवत्यणुनिकरे जडे न वा न चात्मनि स्फुटमतनो तथाप्यये ।
अदृष्टमित्यसदवकल्पनां मुधावलम्बतेम्बरतरमेव तार्किकः ॥ ३४ ॥

प्रत्यक्षतास्ति नभसो नचादृष्टं समञ्जसम् ।
नाप्रत्यक्षेश्वरे तस्मादणवो विश्वहेतवः ॥ २ ॥

सूत्राणि- नाणवः काणभुजाः ६-१ १६ । त आकाश उपलभ्यमाने मत्स्या इव वारिणि ६-१-२० । न शून्यमन्तरे वियतो वस्तुत्वात् ६-१-२१ ॥

दशमाधिकरणमारचयति—

शरीरपञ्जरस्थोसौ ज्ञाता भवति वा न वा ।
शरीरपञ्जरस्थः स्याद्बाह्यस्य ज्ञानमावहन् ॥ १ ॥
आत्मन्येव शरीरादि सर्वमेष प्रपश्यति ।
अबाह्योनन्तरस्तस्मात्कृत्स्नो रसघनो मतः ॥ २ ॥

---

प्रभामये वियति झषाइवाम्भसि स्फुरत्तडिद्वपुष इहाणवः परैः ।
प्रकल्पिताः प्रकृतिविदां वरैः परं किर्याच्चरं हृदि दधतु स्थितिं विदाम् ॥३५॥
यथा तथा स्थितिमणवो दधत्वमी वहन्ति ते न तु ननु शून्यमन्तरे ।
तदन्तरे वियदिति वस्तु दृश्यते यदात्मकं सकलमुशन्ति केचन ॥ ३६ ॥
(अ॰१०) सह स्थितिर्यत उपलभ्यतेनयोस्ततो भिदा न भवति वित्तिवस्तुनोः।
यदोभयप्रतिनियतोभयस्थितिस्तदोभयोर्भवति भिदा न वस्तुतः ॥ ३७ ॥
चिदात्मनि स्फुरति ततस्तु शाश्वतेखिलात्मके ननु विषयेन्द्रियादिकम् ।
न तत्स्थितिर्भवति चिदात्मनः पृथक् समस्ततः पृथगथवा चिदात्मनः॥३८॥
चिदात्मके मणिमयसालभञ्जिका-समे मनोमणिमुकुरेषु वस्तुनः ।
इहेष्यते प्रतिफलनं द्वयांशयोः समागमे प्रभवति संनिकर्षतः ॥ ३९ ॥
चिदंशयोर्यदि तु न संनिकृष्टता तदा भवेत्प्रतिफलनं कथं तयोः ।
अतोंशयोर्भवति न विप्रकृष्टयोश्चिदात्मनः स्फुटमितरेतरग्रहः ॥ ४० ॥

सूत्राणि--उभयव्याप्तेरभेदपर्यवसायित्वादुपलम्भोपलब्धशोरभेदः ६-१-२२ । सर्वात्मनः स्वात्मनि विषयेन्द्रियसंनिकर्षोपलम्भः ६-१-२३ । मनोमुकुरेषु तदुपलम्भेषु संनिकृष्टोपलम्भान्तरप्रतिफलनम् ६-१-२४ । संनिकर्षविशेषाभावादंशेनांशान्तराग्रहः ६-१-२५ । तस्मादिन्द्रियेण द्रव्यादेरुपलम्भोऽनुपलब्धपूर्वस्य ६-१-२६ ॥

एकादशाधिकरणमारचयति—

कार्यकारणभावाद्वा स्वभावाद्वानुमा न वा ।
भवेत्तयोरेकतरात्सर्वत्रैवं हि दृश्यते ॥ १ ॥
कार्यकारणयोरत्रानन्यत्वात्संगतं न तत् ।
उक्तं त्ववयविज्ञानमनुमायाः प्रयोजकम् ॥ २ ॥

न वस्तुनः पृथगिह विस्तितः स्थितिश्चिदात्मनोऽखिलमुपलब्धिरात्मनि ।
न तस्य तत्तनुमयपञ्जरस्थितेर्निजेन्द्रियैर्बहिरिह वस्तुनो ग्रहः ॥ ४१ ॥
(अ॰ ११) न केवलादिह सहचारतोऽनुमा न शृङ्गयोः परमपरानुमापकम् ।
घनागमेऽप्यभिनवपादुकस्य वा घनानुमा न च नवपादुकाभृताम् ॥ ४२ ॥
विमृश्य तत्किल कतिचिच्चिरन्तनाः प्रपेदिरे प्रतिनियतां स्थितिं द्वयोः ।
स्वभावतः क्वचिदथ कार्यकारण-प्रकल्पतः क्वचिदनुमाश्रयं द्विधा ॥४३॥
न शिंशपा त्यजति तरुस्वभावतामतस्तरोर्वहति गुणानसाविति ।
चिरन्तनो वदति समञ्जसं न तच्च जातिरस्त्यतिशयिनी विशेषतः ॥ ४४ ॥
अवस्थितिर्घटकचयस्य या परा वदन्ति तां कतिचन कारणाख्यया ।
अमुष्य या स्थितिरिह कार्यरूपतः परे विदुः पुनरिदमेव कारणम् ॥ ४५ ॥

सूत्राणि—नानुमानं सहचारात् ६–१–२७। कार्यकारणभावात्स्वभावाद्वा ६–१–२८। स्वभावो नाममात्रम् ६–१–२९। कारणमंशावस्थानविशेषः ६–१–३०। कारणकारणत्वादन्यथासिद्धमन्यत् ६–१–३१। तस्मादुपादानमात्रम् ६–१–३२। तदनन्यत्वमौपनिषदं बादरायणः ६–१–३३। नाविर्भावतिरोभावौ योगवियोगौ तु संनिवेशान्तरे ६–१–३४। कार्यपरीक्षया कारणनिर्णयश्चेदसंनिकृष्टावयवानुमानम् ६–१–३५। अवयविन उपलब्धिरिति चेन्न तस्यावयवसमूहानतिरेकात् ६–१–३६॥

---

अपेक्ष्यते किमपि न कार्यसिद्धये परं यतस्तदिह मुधा त्रिधा विदुः।
निमित्तमप्यथ समवायि कारणं कुतार्किकास्तदसमवायि चापरम् ॥४६॥
यदेककं किल समवायिकारणं तदिष्यतां ध्रुवमिह कार्यसिद्धये।
चिदात्मिकां प्रकृतिमिमां निमित्तमित्यपि स्फुटं प्रवदति बादरायणः ॥४७॥
न कार्यतोऽपि च विविनक्ति कारणं विदंस्तयोर्न्नविवर एकतां स्फुटाम्।
न कार्यतस्तत इह कारणानुमा गवेष्यतामितरदृतोऽनुमाश्रयः॥ ४८॥
इहान्यथा भवति च संनिवेशने वियोजनं घटनमथोभयं तु वा।
तिरोहितिर्न भवति नाप्यथोदयो नवस्य कस्यचिदितरस्य वस्तुनः ॥४९।
न कार्यतस्तत इह कारणानुमा यतोंऽशतः सविधगतात्परस्य सा।
शुचेः स्फुटं भवति कणांश एकको यमंशतोऽनुमिमत एव धूमतः॥ ५०।
कुतार्किका अवयविनो नवस्य यदुपद्धं विदुः स्फुटमसमञ्जसं तु तत्।
विभिद्यतेऽवयवसमूहतो यतो न किंचिदप्यवयविनामभाजनम्॥ ५१॥

द्वादशाधिकरणमारचयति—

दिव्यास्ति शक्तिर्योग्यादेर्न वास्त्येव यतस्त्वमी ।
अप्रत्यक्षानुमायोग्यं जानन्ति स्म महौजसः ॥ १ ॥

न प्रत्यक्षानुमायोग्या सा शक्तिर्नास्त्यतः स्फुटम् ।
मूढा गुणातिक्रमाद्यैरेताः कुर्वन्ति कल्पनाः ॥ २ ॥

सूत्रे—न योगिप्रत्यक्षमन्यादृशम् ६–१–३७ । विशेषोत्प्रेक्षागुणविलङ्घनमध्यमविपर्यासाद्याहेत्वाभासप्रयोजकावाच्याः ६–१–३८ ॥

इतिषष्ठाध्याये प्रथमाह्निकम् ॥

---

(अ॰ १२) न योगिनामपि ननु दिव्यशक्तितावधानवानपि नहि पृष्ठतोमतम् ।
पुरः स्थितं त्वतिविशदं निरीक्षते प्रमादवांस्तु पुरतोऽपि पश्यति ॥ ५२॥
असंगतं स्फुटमपि दिव्यशक्तिभिर्विभाव्यते निखिलमनन्ययोगतः ।
इतीदृशं वियदरविन्दकल्पना हृदालये दधति न पारमार्थिकाः ॥ ५ ३ ॥

विशेषस्योत्प्रेक्षा स्थितिमति तु सामान्यविषया
गुणं वातिक्रम्यानुमितिरथ मध्यानवधृतिः ।
इमे तर्काभासाः स्फुटमनुदिताः प्रज्ञविभि-
र्मुहुश्चित्रं लोके विदधति धियां विप्लवमलम् ॥ ५४ ॥

अतः स्ववीरस्त्रीसुरतर्विशेषादि कलयं-
श्चिरत्नानां दिव्यां करणपटुतां श्रद्धधदयम् ॥
शिशुर्मुग्धो दग्धैरतिशठविडालव्रतवकैः
प्रतार्यारात्कष्टां व्यसनमनुधावत्यविदितम् ॥ ५५ ॥

इति षष्ठाध्याये प्रथमाह्निकम् ।

# षष्ठाध्याये द्वितीयाह्निकम् ।

षष्ठाध्याये द्वितीयाह्निके प्रथमाधिकरणमारचयति—

प्रामाण्यमाप्तवचसामर्थवादेऽस्ति वा न वा ।
ऋष्यादयो हि सर्वज्ञाः श्रद्धेयवचसः सदा ॥ १ ॥
धर्मज्ञा ऋषयः प्राञ्चः सर्वज्ञो नास्ति कश्चन ।
अव्याहते विधावेव तस्मादाप्तोऽनुगम्यते ॥ २ ॥

सूत्राणि—शब्दो नार्थवादे न वा व्याहते विधौ ६–२–१ । तस्माद्व्याहते विधाविति नियमो वाच्यः ६–२–२ । तदवचनं दोषोक्षचरणादीनाम् ६–२–३ । पूर्वजाः साक्षात्कृतधर्माणो न सर्वज्ञाः ६–२–४ ॥

---

अ· १ ) विधिषु केवलमाप्तगिरः प्रमा यदि विधेर्विषयः सुसमञ्जसः ।
न पुनरर्थवचस्त्वपरीक्षया भवति सत्यमसत्यमथापि वा ॥ १ ॥
द्वयमिह त्रिगुणं खलु षट्समं द्विगुणनेऽस्य चतुःसमता मता ।
इति न वस्तुविनिश्चितये जनः परमते रमते ऋजुकोऽपि सन् ॥ २ ।
नियतमाप्तगिरामनुपालनं विधिचये विदधीत समञ्जसे ।
अनियमोऽत्तपदार्थविवेकतो विनियमस्त्वयमस्त्वनर्थाद्धुवाम ॥ ३ ॥
विदितधर्मपथा ऋषयोऽभवन्निति वचः स्मर यास्कमुनेः सखे ।
जगति सर्वविदः पुरुषाः परं जिनमते न मते श्रुतिसेविनाम् ॥ ४ ॥
न पुनरल्पविदोऽपि पितुर्विधीन्न गणयन्ति सुताः पितृवत्सलाः ।
गतभयोऽपि हि वस्तुपरीक्षणे विनयतो न यतोऽल्पमपि स्खलेत् ॥ ५ ॥

द्वितीयाधिकरणमारचयति—

प्रमाणं त्रितयादत्रातिरिक्तं संभवेन्न वा ।

ऐतिह्यादेः प्रमाणत्वात्संभवेदेव सर्वथा ॥ १ ॥

केषांचिदन्तर्भावोऽत्र त्रयेऽन्येषाममानता ।

त्रयमेव प्रमाणं तदतिरिक्तं न संभवेत् ॥ २ ॥

सूत्रे–त्रितयातिरिक्तोत्प्रेक्षा पुनरुक्तिर्व्याहतिर्वा ६–२–५ । विस्तरेण निरस्तान्यैः ६–२–६ ॥

तृतीयाधिकरणमारचयति—

साम्यवैषम्यरूपे स्तो लयसृष्टी न वा पुनः ।

कापिलानामिव स्यातां सर्वस्यैते समञ्जसे ॥ १ ॥

अव्ययो ह्ययमश्वत्थो न सर्वस्य भवाप्ययौ ।

एकस्य नाशे सन्त्यन्ये क्रमनाशादिशालिनः ॥ २ ॥

---

(अ॰ २) अनुपलब्धिजनश्रुतिसंमितं यदपि मानमुशन्ति चिरन्तनाः ।

त्रितयतोऽभ्यधिकं विनिरस्यतां चिरमयं रमयन्भ्रम एव वः ॥ ६ ॥

(अ॰ ३) प्रकृतिरस्ति सदा पुरुषोऽपि चेत्क्रयमथो कपिलस्य भवाप्ययो ।

न गुणसाम्यनिमित्तमवेयते प्रकृतिरस्तु निरस्तु कथं नु सा ॥ ७ ॥

भवति वाप्य इहाम्बुचयाद्यथा भवति वाष्पचयोऽपि तथाम्बुनः ।

प्रकृतिता कतरस्य तदस्त्वदः कपिलयेवलयेवगमिष्यति ॥ ८ ॥

न भविता भवितापविमोचणं युगपदङ्ग पदं गहनं हि तत् ।

असमता समतान्यनिघ्नं गुणैः सकलया कलया न भवाप्ययो ॥ ६ ॥

सूत्राणि–न साम्यावस्था हेत्वभावात् ६–२–७। अव्यक्ताद्व्यक्तं कपिलस्येति चेद्विपर्ययेऽपि वारिवाष्पवत् ६–२–८। न सृष्टिर्नाप्ययः सर्वस्य ६–२–९। सृष्टेरयौगपद्यादेकाप्ययेऽप्यन्यावस्थानात् ६–२–१०। अव्ययोऽश्वत्थ इति वासुदेवः ६–२–११॥

चतुर्थाधिकरणमारचयति—

संशयादिग्रहः साधुरार्हतानां न वा पुनः।
सर्वं तीर्थकरैरुक्तं सर्वज्ञैः स्यात्समञ्जसम्॥ १॥
सर्वज्ञत्वं न कस्यापि संशयादिग्रहस्ततः।
विरुद्धो युक्तिभिर्हन्त नाङ्गीकार्यः कथञ्चन॥ २॥

सूत्रम् – संशयसर्वज्ञतालोकाकाशादि व्याहतमार्हतानाम् ६–२–१२॥

पञ्चमाधिकरणमारचयति—

कारुण्यपरमा युक्ता सौगती कल्पना न वा।
सर्वत्यागपरा युक्ता कल्पनासौ भवेद्ध्रुवम्॥ १॥

---

जगदिदं चलपत्रमतोऽव्ययं वदति सोऽपि धनञ्जयसारथिः।
निखिलसृष्टिलयं वदतः सतामरुचिरे रुचिरेतु कथं मते॥ १०॥
(अ॰ ४) सकलसंशयवादमुखचसौ जिनकुलस्य तथा सकलज्ञताम्।
कृमिषु हा मनुजेष्विव चार्हतः कृतदयंस्तदयं समुपेक्ष्यताम्॥ ११॥
(अ॰ ५) क्षणिकतामखिलस्य च दुःखतामपि विदन्सकलस्य च शून्यताम्।
अविदधे सुगतानुगतस्तनुं करुणयारुणया किल कन्यया॥ १२॥
सकलशून्यकथोऽपि पुनर्जनिं निरयनाकसुरासुरकल्पनाम्।
अपि वदन्नसमञ्जसतानिधिर्न सुगतोऽसुगतो भगवानसौ॥ १३॥

शून्यकर्मगृहत्याग-श्वापदानुग्रहादिभिः ।
व्याहता कल्पना सेयं स्फुटमेवासमञ्जसा ॥ २ ॥

सूत्रम्-शून्यस्वलक्षणदुःखक्षणिकत्वादि सौगतानाम् ६-२-१३॥

षष्ठाधिकरणमारचयति—

लोकायतं मतं सम्यङ् न वा सम्यगिदं स्फुटम् ।
विनिश्चितं हि प्रत्यक्षं व्यक्तेः स्वार्थैषणा तथा ॥ १ ॥
ऋणादिमूर्खताग्रस्तमालस्यात्सर्वनाशकृत् ।
नेदं मतं समीचीनं परमात्माद्यवेदनात् ॥ २ ॥

सूत्रम्-परमात्माज्ञानं प्रत्यक्षैकवादित्वं च चार्वाकाणाम् ६-२-१४ ॥

---

पितृकलत्रसुतादि परित्यजन् सुगतः समखिद्यत जातु यः ।
अबलयत्सतरक्षुकुटुम्बिनीं स्वपिशितेऽनशितेन कृशां कथम् ॥ १४ ॥
तनुरियं नियतं सकलात्मनः कथमिमां पशवे विसृजेद्बुधः ।
भगवदीयधियं कुरु तत्तनौ न ममताममता सुधियां हि सा । १५ ॥
(अ० ६) अनुमितेर्विमुखा ऋणकौशलाद्घृतलिहः किल जीवमतानुगाः ।
यदधमर्णपदं सुखमुत्तमं निजगदुर्जगदुत्तयेऽस्तु तत् ॥ १६ ॥
अनुमितावरुचिं दधतः परां ननु चिरादधुनापि तदङ्गजाः ।
खचरताद्यवयन्ति नरादिषु भ्रमहता महतामिह शश्वतः ॥ १७ ॥
अपि नरानखिलान्खलु दृष्टवानसि न ते खचरा इति वक्षि यत् ।
इति जनं परिभर्त्स्य अणोरमी खचरणे चरणे विनियुञ्जते ॥ १८ ॥
ननु जनश्रुतिभक्तिपरायणा निभृतनास्तिकृतोपहता मुदम् ।
वहथ शिल्पकलाद्यरयो विदाः किमवनोमवनीय विपत्यथे ॥ १९ ॥

सप्तमाधिकरणमारचयति—

नराद्याकारता देवादीनां युक्तियुता न वा ।
नरवानरसिंहर्क्षाद्याकारास्ते श्रुताः स्मृताः ॥ १ ॥
नराद्याकारता नैव सूर्यादीनां न वा पुनः ।
निराकृतित्वं किन्त्वेषां गोलाद्याकारता स्फुटा ॥ २ ॥

सूत्रम् – नराद्याकारनिराकारादिवादो वाद्यन्तराणाम् ६–२–१५ ॥

अष्टमाधिकरणमाचरयति—

सर्वस्यास्य नियन्ता च कारणं चास्ति वा न वा ।
अस्तीश्वरोऽस्याः प्रकृतेर्नियन्ता कारणं तथा ॥ १ ॥

---

(अ. ७) रविशशिक्षितिभौममुखान्सुरान्सुरवरं सकलात्मकमेव वा ।
अतनुजन्तुतनून्वदतु ध्रुवचयनयोरनयोरलमञ्जनम् ॥ २० ॥
(अ. ८) न तनुतस्तनुमानतनुः पृथक् सकलात्सकलात्मक ईश्वरः ।
तिमिरदग्धदृशः शशियुग्मतोऽप्यसमसारमसारमिदं मतम् ॥ २१ ॥
नियतयोगवियोगवशाज्जगत्परिणमत्यलमेतदनुक्षणम् ।
पृथगतो मनसाप्यथवा स्वनैर्जनयतो नयतः स्थितिरोच्यते ॥ २२ ॥
खलमरुत्प्रतिघातभवैस्तटो दलति वीचिचयैरिति दृश्यते ।
क इव वेत्तु ततः स्फुटफूत्कृतीर्भुजगराजगराभिहतीरपाम् ॥ २३ ॥
न पितरौ कलशस्य न वा शिशोस्तरुलताप्रभृतेरपि शिल्पकृत् ।
कृतविवेकतया विविनक्ति नो जडमते कृमकृत्रिमकृत्रिमम् ॥ २४

यतः स्वनियतैषा च स्वयम्भूर्ब्रह्मरूपिणी ।
प्रकृतिर्नास्त्यतोन्यच्च तस्मान्नेशः परः पृथक् ॥ २ ॥

सूत्राणि—न कारणैक्यान्न नियमादीश्वरसिद्धिः ६–२–१६। न पुरुषः क्लेशाद्यपरामृष्टः ६–२–१७ । एवमन्येपि हेत्वाभासाः ६–२–१८ ॥

नवमाधिकरणमारचयति—

विधित्वं स्यात्फलापेक्षं न वा श्रौतादिकर्मणाम् ।
पुत्रवृष्ट्यादिहेतुत्वात्फलापेक्षं भवेत्स्फुटम् ॥ १ ॥
अन्यथासिद्धता तेषां फले दृष्टा मनीषिभिः ।
निष्कामं तदनुष्ठानं प्रीत्या वाथ भयेन वा ॥ २ ॥

---

प्रकृतिरङ्ग न कस्यचिदन्विता रुचिमियं भजते रुचितं जनः ।
अरुचितं तु जहाति ततः सखे सुरुचीररुचोपलम्भयेः ॥ २५ ॥
सुविदिता नियतेरनियम्यता न दहनः शिशिरः किल कस्यचित् ।
यदि नियन्तृ भवेन्नियतेरसावशिशिरः शिशिरोस्य कृते भवेत् ॥ २६ ॥
न तरुरेक इहाम्रमधूकयोर्न च नरस्य खरस्य पितैककः ।
भवतु विश्वपिता कथमेकको भ्रमरतामरतः परितुष्यति ॥ २७ ॥
न धरणेरपि शासक एकको न भगणस्य च केन्द्रमिहैककम् ।
अमितविश्वगणस्य नियामकं कथमुदेतु मुदे तु तवैककम् ॥ २८ ॥
(अ. ६) श्रुतिविधीन्कुरुषे फलवाञ्छया यदि तदा विफलांशमपि त्यजेः ।
श्रुतिरवैर्न पयोदविजृम्भणं भण तया स्तुतयास्तु किमु शुचा ॥ २९ ॥
सुदृढभावनयेव विधेः फलं पृथुकवाक्यमिदं त्वसमञ्जसम् ।
न पयसो ननु पोत्रिणि गोभ्रमः कितव हे तव हेतुरलं भवेत् ॥ ३० ॥

सूत्राणि—कर्म श्रौतादि विधिमात्रं तस्य सफलत्वं व्याहतं कर्मवादिनाम् ६-२-१९। प्रत्यक्षानुमानबाधाच्च ६-२-२०। न श्रद्धया गोदुग्धं दुग्धात्तु श्रद्धा ६-२-२१। तस्मात्तस्याफलं विधित्वं प्रतिष्ठापटादेरिव ६-२-२२। कर्त्तव्यत्वं त्वकाम्यानां तदाचारैः ६-२-२३। सदाचारस्य चरणादिनिर्णायकत्वमात्रम् ६-२-२४। श्रुतिस्मृत्यादिव्यवस्था ६-२-२५॥

दशमाधिकरणमारचयति—

हित्वा स्वधर्ममन्यस्यावलम्बः शस्यते न वा।
श्रेयस्त्वेन्यस्य धर्मस्यावलम्बः किं न शस्यते॥ १॥
वाणिज्यशून्यो धर्मो यत्तारतम्यविवर्जितः।
तस्मात्स्वधर्मे निधनं तुष्टाव वसुदेवजः॥ २॥

---

अफल एव विधिस्तत उच्यते न फलमिच्छसि किं नु वणिज्यया।
कुरु निजाप्तविधीनफलेच्छया विनयवाचयवानपि तन्भजेत्॥ ३१॥
विनियताः श्रुतयः स्मृतयस्तथा किमनुगच्छसि तास्तु परोचिताः।
कुरु निजाप्तविधींस्तु विनिर्णयचर्यय सदाचरणाच्चरणादिकम्॥ ३२॥
परिणये शरणीकुरुते मनुं जलधियानविधौ तु पराशरम्।
श्रुतिषु शुक्लयजूंषि च यस्त्यजेः सतमसं तमसंगतिवल्लभम्॥ ३३॥
( अ. १० ) पितृसमं निजधर्ममुदस्य ये हतधियः परधर्ममुपासते।
विहितभक्तिविपर्ययदुर्णया भ्रमतयो मतयोधपरास्तु ते॥ ३४॥
कलय शून्यमवेह्युत मायिकं जगदिदं भगवांस्तु निराकृतिः।
पशुनराकृतिरेव स वा भवेन्मतमुदेतु मुदे तु कथं न्विदम्॥ ३५॥

सूत्राणि—आराधनादिविपर्यासो भक्त्याभासः शून्यवादो मायावादो नराकारवादो निराकारवाद इत्यादिर्ज्ञानाभासः ६-२-२७। तदनुसरणासंभवेप्यनुसरणोक्तिः पराभिमखीकारश्च दम्भः प्रमादो वा ६-२-२८ । धर्मोपदेशात्कलिर्धर्माभासः ६-२-२६। विध्यर्थवादाभेदो व्याहतानुसरणमव्याहतोपेक्षा च सर्वाभासमूलम् ६-३० ॥

एकादशाधिकरणमारचयति—

विकाशो हीनता वापि जनानां पूर्वजक्रमात् ।
हीनता सर्वथा स्पष्टं पूर्वजा हि महाधियः ॥ १ ॥
औत्सर्गिके विकाशोत्र हीनता यत्र कुत्रचित् ।
निर्धूय हीनतां तस्माद्विकाशाय प्रयत्यताम् ॥ २ ॥

---

क इव शून्यमवैत्युत मायिकं युवतिमोदकवित्तमुखं जगत् ।
सकलभोगमुखश्चिभतं मठे यतिरयं तिरयत्यपरान्गिरा ॥ ३६ ॥
स्वयमधर्मपराः कलिवाञ्छया दधति धर्मधुरां कितवा भुवि ।
अचलधर्ममतिर्मतवादितां न वहतेऽवहतेचथाकिल्विषः ॥ ३७ ॥
विधिगिरोर्थगिरश्च पृथङ्न यो न च समञ्जसमप्यसमञ्जसम् ।
प्रविविनक्त्यसमञ्जसतानिधिः स नरकं नरकण्टक ऋच्छति ॥ ३८ ॥
(अ॰ ११) विकसति क्रमतः सतनुस्तनुर्जनकयोगभवा भुवनेष्वलम् ।
अवरजे नियतावनतिः स्थिता गतिमिमां तिमिमांसलधीर्जगौ ॥ ३९ ॥
विदितमत्र कलादि यदेकदा ध्रुवमवेहि न तद्भुवि लुप्यते ।
अनुपयोगहतं तदुपेक्ष्यते न पुनरस्य नरस्य तदेषणा ॥ ४० ॥

सूत्राणि—क्रमविकाशः शरीरस्य सत्त्वस्य च ६-२-३१। अविलोपो ज्ञातस्य ६-२-३२ । न बीजे फलान्वेषणम् ६-२-३३ । अवस्थापकर्षात्प्रमादाच्च निरोधः कादाचित्को विकाशस्य ६-२-३४ ॥

द्वादशाधिकरणमारचयति—

एतद्दर्शनतत्त्वानि पूर्वैर्दृष्टानि वा न वा ।
न दृष्टान्येव भिन्ना हि गतिरस्योपलभ्यते ॥ १ ॥

---

फलकृते ननु बीजमपेक्ष्यते विफलबीजधरः खलु बालिशः ।
अखिलबीजनिभाः श्रुतयोऽपि चेदफलिनीः फलिनीरिव ताः क्षिपेः ॥४१॥
जरठताऽऽसु फलस्य विरोधिनी जयति हा भवतोऽलसताथ वा ।
अयि नवीकुरु वाङ्मयमात्मनो भवद्धितेऽवहितेन हृदा सखे ॥ ४२ ॥
अथ विकासनिरोध उदेति चेदनवधानवशाज्जनतासु वा ।
पुनरिहावहितास्तु वितन्वते भुवि कला विकला न भवन्ति याः ॥४३॥
(अ० १२) ऋषिरुपनिषदश्च वासुदेवः स च भगवानथ बादरायणश्च ।
सुविमलमतिरार्यवल्लभश्च प्रकटममी परमार्थिनश्चिरत्नाः ॥ ४४ ॥
उपदिदिशुरमी पृथक् पृथग्यत्पितृचरणैर्गुरुभिश्च यत्तथोक्तम् ॥
अखिलमिति परीक्ष्य तत्प्रणीतं नवमनुशासनमेतदात्मतुष्ट्यै ॥ ४५ ॥
अयं समाम्नाय उदेति पूर्वजोपदेशमन्त्रानवलम्ब्य निर्मितः ॥
जनार्दितो भूम्नि भवात्मकोऽर्पितो यदात्मिका यस्य समष्टिरूर्जिता ॥४६॥
चिरन्तना ये परमार्थदर्शिनो न मूलतत्त्वे विमतिर्ममेह तैः ।
विशेषनिष्ठा विमतिस्तु तैः स्थिता विपर्ययोऽस्यामपरैस्तु दृश्यते ॥४७॥

दृष्टानि पूर्वजैर्नूनमृषिप्रभृतिभिश्चिरात् ।
संग्रहोऽत्र कृतस्तेषां स एवाभिनवः स्फुटम् ॥ २ ॥

सूत्राणि–ऋष्युपनिबद्धासु देववादरायणवैश्वानरपूर्वत्वमनु० शासनस्य ६-२-३४ । मन्त्रः पैतृकः समाम्नायः स्वीयः ६-२-३५ । सर्वं तु सर्वात्मीयम् ६-२-३६ । प्रमत्तव्याख्यातृविकलीकृते जगत्याभासनिरासोऽनुशासनस्य परमं प्रयोजनम् ६-२-३७। ऋष्यादयः प्राच्यामाभासनिरासका उक्ताः ६-२-३८। तदुक्तीस्तदासांश्च परमार्थभक्तोऽप्रमादेन व्याहताव्याहते विविच्य संगृह्णाति६-२-४०। शब्दाःप्रमाणमनुक्रमणोपपण्डितानामत्र संवादमात्रार्थम् ६-२-४१

---

ऋष्यादयः स्वसमयेषु परीक्ष्य तत्त्वान्याभासजालमधुवन्सुधियः स्वशक्त्या ।
अव्याहतानि वचनानि परीक्ष्य तेषामूरीकरोति परमार्थपरः सुमेधाः॥४८॥
यद्व्याहतं तु विदितं जनतासु हन्त ऋष्यादिनामभिरपि प्रसभं स्वचित्तात् ।
एतच्चिरस्य सुमतिः परमार्थभक्तः सम्यग्विवर्धयति तत्पितृभिः कृतं यत्४९॥
सर्वेऽपि नैव विरजा अधुनातना वा विद्वांस एव बहवः स्फुटमूर्खभावाः।
कस्यापरीक्ष्य वचनं तदिहाभ्युपेयं तस्मात्प्रवर्त्तय सखे सततं परीक्षाम्॥५०
विद्यागमं शुभमसौ जनको ब्रवीति वृद्धं पितामहयुगं तममङ्गलं तु ।
बालोऽत्र कस्य वचनं प्रतिपद्य गच्छेद्बुद्धो न चेदकृपणः शरणं स वाञ्छेत्५१
शब्दाः प्रमाणमविधावधियां पशूनां विद्याद्दृशां परमनुक्रमपण्डितानाम्-
संवादमात्रमिह सूचयितुं तु केचिच्छब्दाश्चिरन्तनविदां विधृताःपरीक्ष्य५२

प्राचीनतरत्वे प्रशस्यताल्पसाधनत्वात्कार्यं त्ववार्चीनतमैः साधनाधिक्याद्वस्तुन उत्कर्षात् ६-२-४२ । सपरीक्षा प्रवृत्तिस्तु सर्वत्र ६-२-४३ ॥

---

न कपिलमुनिकाले ब्रह्मसूत्राण्यर्थातिष्ठन्कपिलमतमपश्यद्ब्रह्मसूत्रप्रणेता ।
कपिल इह सदोषोऽपि प्रशस्योऽसहायो न तु कपिलसहायो ब्रह्मसूत्रप्रणेता॥५३॥

सति महति सहाये न स्तुतिः संप्रणेतुः कृतिरपितु तदीया श्रेयसी कार्यकाले
शतिनमधनपुत्रं श्लाघमानोऽपि तातं भजति निजसहस्रे नूनमास्थां सहस्री॥५४॥

आतन्वानः परीक्षामिति विमलमतिः श्लाघमानोऽपि पूर्वा-
नास्थां तव्येषु बिभ्रत्पितृकृतिविकसच्छास्त्रसंपत्सु शश्वत् ।
सम्यग्विध्यर्थवादौ पृथगथ विभजन्व्याहताव्याहते च
श्रेयोऽर्थी भूम्नि सर्वात्मनि विहितरुचिः शास्त्रसेवां विदध्यात् ॥ ५५ ॥

इत्थं तैमिरिकाद्विचन्द्रमतितोऽप्यत्यन्ततुच्छं स्फुटं
द्वैतं जीवतनूजगत्पतिजगत्प्रायं निरस्याधुना ।
व्यक्ताद्वैतमुदारमुन्नतधियामुल्लास्य मोदावहं
सर्वात्मीयतया कृती हृदि दधे रामः परां निर्वृतिम् ॥ ५६ ॥

अगाधपूरे परमार्थभाष्य-
महार्णवे संचरणाक्षमाणाम् ।
आलीव रामेण मनोज्ञबन्धा
विनिर्मितेयं लघुरत्नमाला ॥

इति षष्ठाध्यायः समाप्तः ॥

अधिकरणरत्नमाला परमार्थदर्शनीया समाप्ता ॥